# ब्राह्मधर्म्मः ।



सुगृहीतनामधेयस्य

महर्षिदेवेन्द्रनाथस्याभ्यनुज्ञया

तदीयसभाध्यक्षश्रीहेमचन्द्रविद्यारत्नेन

संस्कृतेन संकलितया विवृत्या सहितः ।



कलिकाताराजधान्यां

वाल्मीकियन्त्रालये

श्रीविश्वनाथ नन्दिना मुद्रितः प्रकाशित

आदिब्राह्मसमाजकार्य्यालये प्राप्तव्यश्च ।

शकाब्दाः १८१७ ।



...लं यद्भुता ।

# ब्राह्मधर्म्मः ।

सुगृहीतनामधेयस्य

महर्षेर्देवेन्द्रनाथस्याभ्यनुज्ञया

तदीयसभाध्यक्षश्रीहेमचन्द्रविद्यारत्नेन

संस्कृतेन संकलितया विवृत्या सहितः ।

कलिकाताराजधान्यां

वाल्मीकियन्त्रालये

श्रीविश्वनाथ नन्दिना मुद्रितः प्रकाशित

आदिब्राह्मसमाजकार्य्यालये प्राप्तव्यस्य ।

शकाब्दाः १८१७ ।

मूल्यं अर्द्धमुद्रा ।

## प्रातःस्मर्त्तव्यम् ।

लोकेश चैतन्यमयाधिदेव
मङ्गल्य विष्णो भवदाज्ञयैव ।
हिताय लोकस्य तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये ॥

---

# ब्राह्मधर्म्मबीजम्।

१। ओं ब्रह्म वाएकमिदमग्रआसीत् नान्यत् किञ्चनासीत्। तदिदं सर्व्वमसृजत्।

२। तदेव नित्यं ज्ञानमनन्तं शिवं स्वतन्त्रं निरवयवमेकमेवाद्वितीयं सर्व्वव्यापिसर्व्वनियन्तृसर्व्वाश्रयसर्व्ववित्सर्व्वशक्तिमद्ध्रुवं पूर्णमप्रतिममिति।

३। एकस्य तस्यैवोपासनया पारत्रिकमैहिकञ्च शुभम्भवति।

४। तस्मिन् प्रीतिस्तस्य प्रियकार्य्यसाधनञ्च तदुपासनमेव।

---

अह

त

स

म

# ब्राह्मधर्म्मग्रहणम्।

## ओं तत्सत्।

१। ओं ब्रह्म वाएकमिदमग्रआसीत् नान्यत् किञ्चनासीत्। तदिदं सर्व्वमसृजत्।

२। तदेव नित्यं ज्ञानमनन्तं शिवं स्वतन्त्रं निरवयवमेकमेवाद्वितीयं सर्व्वव्यापि-सर्व्वनियन्तृसर्व्वाश्रयसर्व्ववित्सर्व्वशक्तिमद्ध्रुवं पूर्णमप्रतिममिति।

३। एकस्य तस्यैवोपासनया पारत्रिकमैहिकञ्च शुभम्भवति।

४। तस्मिन् प्रीतिस्तस्य प्रियकार्य्यसाधनञ्च तदुपासनमेव।

अस्मिन् ब्राह्मधर्म्मबीजे विश्वस्य ब्राह्मधर्म्मं गृह्लामि।

---

१। ओं सृष्टिस्थितिप्रलयकर्त्तरि मुक्तिकारणे सर्व्वज्ञे सर्व्वव्यापिनि पूर्णानन्दमङ्गले निरवयवएकमात्राद्वितीये परब्रह्मणि प्रीत्या तत्प्रियकार्य्यसाधनेन च तदुपास्स्यामि।

२। सर्व्वस्रष्टृ परब्रह्मेति सृष्टं किञ्चिन्नाराधयिष्यामि।

३। अरुग्णोऽविपन्नश्चेत् प्रतिदिनं यदा चित्तैकाग्रता तदा श्रद्धया प्रीत्या च परब्रह्मणि मनः समाधास्यामि।

४। सदनुष्ठानाय च यतिष्ये।

५। दुष्कृतिभ्यो निवृत्त्यै यत्नवान् भविष्यामि।

६। यदि मोहात् कुकर्म्म किञ्चित् कृतं स्यात् तदेकान्ततस्तस्मान्मुक्तिमन्विच्छन् न प्रमदिष्यामि।

७। वर्षे वर्षे मदीये च तावत्सांसारिकशुभकर्म्मणि ब्राह्मसमाजाय दास्यामि।

हे परमात्मन् मां प्रति एतत् परमधर्म्मप्रतिपालनसामर्थ्यमर्पय।

ओं एकमेवाद्वितीयम्।

---

## प्रतिज्ञास्मरणार्थश्लोकाः ।

यदस्य जगतोजन्मस्थितिभङ्गादिकारणम् ।
अमृतस्य च यन्मूलमेकं ब्रह्म सनातनम् ॥
प्रीत्या परमया तस्य प्रियकार्य्यनिषेवया ।
उपास्यं तन्मया नान्यत् सृष्टं किञ्चन तद्धिया ॥
यदा कदा प्रतिदिनं नापन्नश्चेन्न रोगवान् ।
श्रद्धाप्रीतियुतं चित्तं समाधास्ये तदीश्वरे ॥
सदनुष्ठाननिरतोविरतश्च तथाऽसतः ।
सर्व्वदाहं भविष्यामि प्रीणनाय परात्मनः ॥
अज्ञानाद् यदि वा मोहात् कुर्य्यां कर्म्म विगर्हितम् ।
तस्माद्विमुक्तिमन्विच्छन् नाचरिष्यामि तत् पुनः ॥
प्रतिवर्षं तथा चैव मद्गृहे शुभकर्म्मणि ।
देयं ब्राह्मसमाजाय प्रतिज्ञातमिदं मया ॥

---

## ब्रह्मोपासना।

### अर्चना।

ओं पिता नोऽसि पिता नो वोधि नमस्तेऽस्तु मा मा हिंसीः।

विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव।

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च।

### प्रणामः।

ओं योदेवोऽग्नौ योऽप्सु योविश्वं भुवनमाविवेश। यओषधिषु योवनस्पतिषु तस्मै देवाय तमोनमः।

### समाधानम्।

ओं सत्यं ज्ञानमनन्तं ब्रह्म।

आनन्दरूपममृतं यद्विभाति।

शान्तं शिवमद्वैतम्।

ओं सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्म्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः। एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। भयादस्याग्निस्तपति भयात्तपति सूर्य्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥

ध्यानम् ।

ओं भूर्भुवः स्वः तत्सवितुर्व्वरेण्यं भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयात् ।

स्तोत्रम् ।

ओं नमस्ते सते ते जगत्कारणाय
नमस्ते चिते सर्व्वलोकाश्रयाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने शाश्वताय ॥
त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत्पालकं स्वप्रकाशम् ।
त्वमेकं जगत्कर्त्तृपातृप्रहर्त्तृ
त्वमेकं परं निश्चलं निर्व्विकल्पम् ॥
भयानां भयं भीषणं भीषणानां
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैः पदानां नियन्तृ त्वमेकं
परेषां परं रक्षणं रक्षणानाम् ॥
वयन्त्वां स्मरामो वयन्त्वाभजामो-
वयन्त्वां जगत्साक्षिरूपं नमामः ।
सदेकं निधानं निरालम्बमीशं
भवाम्भोधिपोतं शरण्यं व्रजामः ।

प्रार्थना।

असतोमा सद्गमय तमसोमा ज्योतिर्गमय मृत्योर्माऽमृतं गमय। आविरावीर्म्मएधि रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्।

ओं एकमेवाद्वितीयम्।

## स्वाध्यायः।

ओं ब्रह्मवादिनोवदन्ति। यतोवा इमानि भूतानि जायन्ते। येन यातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्म। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ति। यतोवाचोनिवर्त्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणोविद्वान्। न विभेति कुतश्चन। रसोवै सः। रसं ह्येवायं लब्ध्वानन्दीभवति। कोह्येवान्यात् कः प्राण्यात्। यदेष आकाशआनन्दोन स्यात्। एषह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतोभवति। यतोवाचोनिवर्त्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणोविद्वान। न विभेति कदाचन।

ओं शान्तिः शान्तिः शान्तिः हरिः ओं।

एषास्य परमा गतिरेषास्य परमा सम्पत् एषोऽस्य परमो-लोक एषोऽस्य परमआनन्दः। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति।

ओं शान्तिः शान्तिः शान्तिः हरिः ओं।

## उपसंहारः।

ओं यएकोवर्णोवहुधाशक्तियोगात्
वर्णाननेकान्निहितार्थोंदधाति।
विचैति चान्ते विश्वमादौ सदेवः
स नो बुद्धा शुभया संयुनक्तु॥

ओं एकमेवाद्वितीयम्।

---

# ब्राह्मधर्म्मः

## प्रथमखण्डम् ।

### प्रथमोऽध्यायः ।

ओँ ब्रह्मवादिनोवदन्ति ॥ १ ॥

ओँ ब्रह्मवादिनः वदन्ति ॥ १ ॥

ब्रह्मज्ञानात्मकः स्वर्ग्योऽग्निः सर्व्वेषां हृद्देशे तिष्ठति । सर्व्वेषु चात्मस्वनन्तमङ्गलस्वरूपं ब्रह्मेतिप्रत्ययो नित्यमुत्कीर्ण इव विद्यते । अचिन्त्यरचनारूपस्य जगतोऽन्वीचया सन्धुचिते च तस्मिन्नग्नौ तादृक्स्वरूपस्य ब्रह्मणोऽपारोच्यमुपजायते । तेनैव भगवता निर्म्मलमात्मनोमङ्गलरूपं निखिलेषु भूतभौतिकेषु मनुष्याणां चित्तेषु च प्रतिष्ठापितं । येच धीमन्तः सुभगाः सुकृतिनः प्रयत्नातिशयेन तत्र कृतप्रत्ययास्तएव ब्रह्मविदः । ये च पुनः प्रत्ययानुसारेण तज्ज्ञानमुपदिशन्ति तएव ब्रह्मवादिनः । ब्रह्म-जिज्ञासार्थं ब्रह्मज्ञानोपदेशार्थं वा नास्ति वर्णदेशकालादिव्य-पेचा । तदुपशिचयितुञ्च नानादिगन्तवास्तव्याः ब्रह्मविदएवा-धिक्रियन्ते । यच्च पूर्व्वैर्भरतविषयवासिभिः ब्रह्मज्ञैः ऋषिभिः परमात्मतत्त्वमात्मप्रत्ययप्रमाणकं सत्यञ्चोपदिष्टं तदेवास्य ब्राह्म-

धर्म्मनिबन्धस्य ज्ञानकाण्डे स्वीकृतं। अतः प्रथममेवाभिहितं ब्रह्मवादिनोवदन्तीति ॥ १ ॥

२

**यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म ॥ २ ॥**

'यतः' यस्मात् 'वै' 'इमानि भूतानि जायन्ते' 'येन' च तानि 'जातानि' 'जीवन्ति' प्राणान् धारयन्ति अन्ते च 'यत्' ब्रह्म 'प्रयन्ति' प्रतिगच्छन्ति 'अभिसंविशन्ति' तमेव प्रतिपद्यन्ते प्राप्नुवन्तीत्यर्थः। 'तत्' 'विजिज्ञासस्व' विशेषेण ज्ञातुमिच्छस्व 'तत् ब्रह्म' ॥ २ ॥

यतो जातानि तावदिमानि चराचराणि भूतानि यत्र संप्रतिष्ठन्ते यस्येच्छया तानि समूलघातं लीयन्ते च तदेव ब्रह्म तत्सत्यं तच्च सर्व्वेषामीशितृत्वेन वर्त्तते। ईश्वरः खलु सर्व्वशक्तिः सत्यकामः सत्यसङ्कल्पश्च। स यदिच्छति तदेव भवति। यस्य शक्त्या सर्व्वं उत्पद्यमानाः शक्तिसम्पन्नाश्च सचेत् संहर्त्तुमीहेत तदा सर्व्वएव सह शक्त्या तस्मिन् शक्त्यैकनिलये लीनास्तमुपस्थास्यन्ति। न पुनः क्वापि तेषां नामरूपेऽप्युपलप्स्येते च। ईश्वरएव जगतां जन्मस्थितिभङ्ग हेतुः। वयन्तु किमप्युपादानमादाय तद्गुणज्ञाः संयोज्य च यथोपयोगं लोकोत्तरं यन्त्रनिर्म्माणपाटवं घटयाम। निर्म्माय च पुनर्लीलयैव तत् विध्वंसयाम। परन्त्वणुपरिमाणमपि किञ्चित् स्रष्टुं विध्वस्तुं वा न प्रभवाम। सृष्ट्यादिशक्तिस्तु ब्रह्मण्येव प्रतिष्ठिता ॥ २ ॥

३

**आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति ॥ ३ ॥**

'आनन्दात् हि एव खलु इमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्ति अभिसंविशन्ति' ॥ ३ ॥

जन्मस्थितिनाशहेतोरीशितुर्विशेषरहितस्य न किमपि नाम विद्यते। ये च पूर्व्वे ब्रह्मर्षयः सर्व्वगतं निरतिशयं महान्तं पुरुषमात्मनि तिष्ठन्तमनुभूय सान्द्रानन्दसन्दोहेन तृप्तास्ते हि तमानन्दरूपं व्याचचक्षिरे। वयमपि च यदा तत्प्रीतिनिर्य्यूहै-र्विवशीकृताइवानन्दकन्दं भुञ्जामहे तदैव तं तद्रूपं ब्रूमहे ॥ ३ ॥

४

**यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सह ।**
**आनन्दं ब्रह्मणोविद्वान् न बिभेति कुतश्चन ॥ ४ ॥**

'यतः वाचः निवर्त्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणः विद्वान् न बिभेति कुतश्चन' ॥ ४ ॥

ज्ञानघनमनन्तं ब्रह्म न किमपि व्याप्यं वस्तु। तस्मिन्नीशितरि जड़प्रपञ्चस्य मनसो वा कोऽपि धर्म्मो नास्ति। अतः स मन-सोऽविषयएव वर्त्तते। अथ चेत् मनोऽपि तं स्वविषयमुप-पादयितुं न शक्नोति तर्हि वाचोपि तमप्राप्य निवर्त्तन्ते। तावुभावपि तं मन्तुं उन्मेचयितुं च न शक्नुते। सहि मनसो

मनः वचसो वाक् सर्व्वेषां चित्कारणं निधानञ्च । एतावानेव तस्य निर्द्देशः । यस्त्वेवं निर्विशेषं व्यापिनमानन्दघनमात्म-न्यनुभूय नन्दीभवति स एव आप्तकामः । सहि तं प्रेष्ठं लब्ध्वा वितृष्णोऽन्यत् न किमपि काङ्क्षति । प्रपन्नोभूत्वा सर्व्वथा दास्येन तत्प्रियमाचरति । अतिवादमुत्पीड़नं तर्जनं च तृणीकृत्य निर्भीकस्तत्रैव रमते च । परमप्रेमास्पदभूतस्य तस्य निदेशमनुसर्त्तुं प्राणपरिव्ययोऽपि यस्येषत्करः न जाने कस्माद्भयापादानात्तस्य भीतिर्भविता । स खलु यस्मात् प्राणानां प्रवृत्तिस्तस्य सविधे स्वप्राणान् संन्यस्य वीतभयः समजनि । दूरे आस्तां तावदन्येषां वार्त्ता सर्व्वसंहारकारकः स्वयं कृता-न्तोऽपि तं व्यथयितुं न क्षमते ॥ ४ ॥

५

रसोवै सः । रसं ह्येवायं लब्ध्वानन्दीभवति ॥ ५ ॥

'रसः' आनन्दकरस्तृप्तिहेतुः 'वै' 'सः' परः आत्मा । 'रसं हि एव' 'अयं' जीवः 'लब्ध्वा' प्राप्य 'आनन्दी' सुखी 'भवति' ॥ ५ ॥

यस्य प्रेमरसमास्वाद्य जीवो नितरां मोदते वागियं स्वत-एव तं रसस्वरूपं ब्रूते ॥ ५ ॥

६

कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दोन स्यात् । एषह्येवानन्दयाति ॥ ६ ॥

'कः हि एव' लोके 'अन्यात्' चेष्टां कुर्य्यात् 'कः' वा "प्राण्यात्' प्राणन'

कुर्य्यात् 'यत्' यदि 'एषः' 'आकाशे' 'आनन्दः' आनन्दरूपः परः आत्मा 'न स्यात्'। 'एषः' परमात्मा 'हि एव' 'आनन्दयाति' आनन्दयति सुखयति लोकं धर्म्मानुरूपम् ॥ ६ ॥

यत्सत्तयेदमप्रतिमं जगज्जातं जीवाश्च जीवातवे प्रभवन्ति असति च तस्मिन् जगतो नामापि न श्रूयते। स हि सर्व्वस्रष्टा सर्व्वाश्रयश्चेदिदं प्रपञ्चजातं न सिसृक्षेत् नाप्यध्यक्षतया नियमयेत् तर्हि क्व वा भूरादिलोकः कुत्र वा इमानि जीवजातानि क्व च वा सर्व्वेषां कर्म्म सुखं सौभाग्यं च। स एव लोकानानन्दयति। एष विश्वपालोऽस्माकं प्रीतये यस्मिन्नधिष्ठाने यत् सुखं विदधे तत्र तदुपलभ्य वयं मोदामहे। अहो निर्विण्णे खलु लोकोत्तरचमत्कारकारिणीं निसर्गश्रियमुपयुज्य स्वादूनि रसवन्ति चान्नान्यनुभूय पित्रोर्वात्सल्यं सुहृदाञ्च प्रेम संप्राप्य विज्ञानसहितं ज्ञानमाचर्य्य च स्वधर्म्मं यत् सुखं येन केनापि मिषेणास्माभिरुपादीयते धातुः प्रसादएव तत्र निदानं। किं ब्रूमस्तस्य कारुण्यं। न केवलमसौ विषयोत्थं सुखमस्मभ्यं विधत्ते अपि तु यश्च तं वृणुते स एव प्राकाम्येन पश्यति। स खलु प्राणानामप्यायनमनुभूय निराशीर्भवति। ये च स्थिरधियः शान्ताः सुखमैन्द्रियकमवहुमन्यमानास्तमेव कामयन्ते स हि तेषामनुकम्पयात्मानमाविस्तरं प्रकटयन परिमार्जयंश्च शोकोष्णं वास्पं पीयूषनिर्य्यूहहृत्सरोजमुन्मीलयति। अहो तेनैव सुभगेन तस्य महत्त्वं ज्ञातं यः क्षणमपि तमानन्दघनमालम्ब्य-द्राक्षीत् ॥ ६ ॥

७

यदा ह्येवैषएतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतोभवति॥ ७॥

'यदा' यस्मिन् काले 'हि एव' 'एषः' साधकः 'एतस्मिन' 'अदृश्ये' अविषयभूते 'अनात्म्ये' अशरीरे 'अनिरुक्ते' अविशेषे विशेषोहि निरुच्यते अविशेषश्च ब्रह्म तस्मादनिरुक्तम् 'अनिलयने' अनाधारे ब्रह्मणि 'प्रतिष्ठां' स्थितिम् 'अभयं' यथा स्यात् तथा 'विन्दते'। 'अथ' तदा 'सः' 'अभयं गतः भवति' अभयं प्राप्नोति॥ ७॥

सति हि भयहेतौ शिशवो यथा मातुरङ्कमासाद्य निःशङ्का जायन्ते वयमप्येवमीश्वरस्य सर्व्वतोभद्रमङ्कमधिरुह्य संसारभयात् जरामरणरूपात् न विभीमहि। तथा च वीतभया अदृश्यमपि सर्व्वेषां द्रष्टारं निराधारमपि विश्वाधारं तमेव सुहृदं शरण्यञ्च ज्ञात्वा तद्विधेयत्वं भजामहे। निधाय च तच्छासनं शिरसि तत्प्रणीते वर्त्मणि सुखं सञ्चराम॥ ७॥

८

यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणोविद्वान् न बिभेति कदाचन॥ ८॥

'यतः वाचः निवर्त्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणः विद्वान् न बिभेति कदाचन'॥ ८॥

यस्य च दुर्म्मतेः शुभस्वरूपे विभोर्विचिकित्सा अस्ति यश्च

नाभिजानाति तस्य गूढ़माकूतं स तिष्ठन्नपि नियमपरिपाटी-घटिते जगति घनान्धकारोपहतइव नित्यं बिभेति । यस्य च तदीयशुभसंकल्पे नास्ति विकल्पना तेनैव जितं ॥ ८ ॥

९

एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो-लोकएषोऽस्य परमआनन्दः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ९ ॥

'अस्य' जीवस्य 'एषा' 'परमा गतिः' आनन्दरूपः परमात्मैव परमा गतिः । सर्व्वासां सम्पदां विभूतीनां मध्ये 'एषा अस्य परमा सम्पत्' । येऽन्ये कर्म्मफलाश्रया लोकास्तेऽस्यापरमाः 'एषः' परमात्मा तु 'अस्य परमः लोकः' । यान्यन्यानि विषयेन्द्रियसम्बन्धजनितानि आनन्दजातानि तान्यपेक्ष्य 'एषः अस्य परमः आनन्दः' । 'एतस्य एव' 'आनन्दस्य' 'मात्रां' कलां अंशं 'अन्यानि भूतानि' 'उपजीवन्ति' अनुभवन्ति ॥ ९ ॥

आनन्दरूपः परमात्मैव परमा गतिः सर्व्वासां गतीनां । तदधिगमएव पुण्यपरिपाकफलं लोकस्य । परमात्मैव परमा विभूतिः सर्व्वासां विभूतीनां । यस्तादृशीं विभूतिमुपलभते सोऽन्यत् न किमपि काङ्क्षति । परमात्मैव परमोलोकः सर्व्वेषां गन्तव्यानां लोकानां । यस्तेनैव लोकवान् भवति सो-ऽन्येषां लोकानां कर्म्मफलोपात्तमनित्यं च सुखं नेच्छति । ब्रह्मोपलम्भएव परम आनन्दः सर्व्वेषां लभनीयानामानन्दानां ।

जीवानां विषयसम्बन्धजन्यमानन्दजातं ब्रह्मानन्दस्य कलां न स्पृशति । तेनैव कलामात्रेणानन्देन सर्व्वे जीवन्ति ॥ ६ ॥

---

## द्वितीयोऽध्यायः ।

१०

इदं वा अग्रे नैव किञ्चिदासीत् । सदेव सौम्येदमग्र-आसीदेकमेवाद्वितीयम् । सवा एष महानज आत्मा-ऽजरोऽमरोऽमृतोऽभयः ॥ १ ॥

'इदं' जगत् 'वै' 'अग्रे' पुरा 'न एव किञ्चित् आसीत्' । 'सत्' अस्तिता-मात्रं वस्तु निर्व्विशेषं निरवयवं 'एव' हे 'सौम्य' प्रियदर्शन 'इदमग्रे' अस्याग्रे जगतः प्रागुत्पत्तेः 'आसीत्' 'एकम् एव' तस्य एकस्य सतः सह-कारिकारणं द्वितीयं अनादिवस्त्वन्तरं प्राप्तं प्रतिषिध्यते 'अद्वितीयम्' इति । यत्तत् सत् 'सः वै एषः महान् अज आत्मा अजरः अमरः अमृतः अभयः' ॥ १ ॥

सृष्टेः प्राक् सद्रूपं ब्रह्मएवासीत् । अन्यत् किमपि नासीत् । सृष्टेरर्व्वाक् चराचराणि तावदिमानि भूतानि ब्रह्म-ण्येवावतिष्ठन्ते । तस्मात्तदेकमेवाद्वितीयमिति गीयते । तच्च सदेकं चिद्रूपञ्च । ज्ञातृज्ञेयोभयस्वरूपत्वाच्चात्मानमात्मना विषयीकरोति अतस्तदात्मेत्यभिधीयते च । ब्रह्म तावन्नापि चेतनवद्व मितमित्येतदुपपादयितुमुत्तरे मन्त्रवर्णेऽभिहितं तच्चा-

पूर्व्वकारणं जरामरणहीनं नित्यञ्चेति। क्षेत्रज्ञः खलु स्रष्टु-रीहया काञ्चित् परिच्छिन्नां शक्तिमधिष्ठाय तस्मादुत्पद्यमान-स्तयैव हेतुभूतया तं व्यपाश्रित्य पर्य्यवतिष्ठते। सा च यावत् वर्त्तिष्यते तावत् सोऽपि स्थास्यति। परमात्मा तु क्षेत्रज्ञ इव न परिणामिस्वभावः। स हि स्वयम्भूः परिपूर्णः स्वतन्त्रश्च ॥ १ ॥

११

## स तपोऽतप्यत स तपस्तप्त्वा इदꣳ सर्व्वमसृजत यदिदं किञ्च ॥ २ ॥

'सः' अज आत्मा 'तपः अतप्यत' जगत्सृष्टिविषयामालोचनाम-करोत्। 'सः' आत्मा 'तपः तप्त्वा' एवमालोच्य प्राणिकर्म्मादिनिमित्तम् 'इदं सर्व्वं' जगत् देशतः कालतोनाम्ना रूपेण च 'असृजत' सृष्टवान् 'यत् इदं किञ्च' यत्किञ्चिदमनवशिष्टम् ॥ २ ॥

सृष्टेः प्राक् परमात्मनोऽन्यत् किमपि नासीत्। अतो नाम-रूपोत्पादने स किल कञ्चित् लौकिको निर्म्मातेव कारणसाचिव्यं नाङ्गीचकार। तेन हि सिसृक्षुणा सर्व्वं व्याकरणीयं प्राक् समी-क्षितं। समीक्ष्य च व्याकृतं। वयन्तु मृच्छिलादिभिर्घटयाम कि-मपि द्रव्यं। न जातु पुनः सा सृष्टिरुच्यते। सृष्टिर्हि नाम विनै-वोपादानकारणमीक्षामात्रेण वस्तुसिद्धिः। न वयमुपादानमन्त-रेण किञ्चिदपि साधयितुं शक्नुमः। ब्रह्मणि तु नित्यं विद्यतएव सा लोकोत्तरा शक्तिः। तस्य ज्ञानं बलञ्च स्वाभाविकं। तत्त-द्वष्टभ्य तेनैव तावदिमानि नामरूपाणि व्याकृतानि ॥ २ ॥

१२

एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

'एतस्मात्' पुरुषात् 'जायते' उत्पद्यते 'प्राणः' एवं 'मनः' 'सर्व्वेन्द्रियाणि च' सर्व्वाणि च इन्द्रियाणि। तथा 'खं' आकाशः 'वायुः' 'ज्योतिः' अग्निः 'आपः' उदकं 'पृथिवी' 'विश्वस्य' सर्व्वस्य 'धारिणी ॥३॥

तस्य खलु सर्व्वशक्तेः पूर्णस्वरूपस्येच्छाविजृम्भितान्येतानि वाय्वग्न्यादीनि निर्म्माणोपकरणानि सह प्राणैर्मनसा च सर्व्वाणीन्द्रियाणि च ॥ ३ ॥

१३

भयादस्याग्निस्तपति भयात्तपति सूर्य्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ४ ॥

'भयात्' भीत्या 'अस्य' परमेश्वरस्य 'अग्निः तपति' 'भयात् तपति सूर्य्यः'। 'भयात् इन्द्रः च वायुः च मृत्युः धावति पञ्चमः' ॥ ४ ॥

नियन्तुस्तस्य प्रशासनादेव अग्निस्तपति सूर्य्य उदेति वातः पवते मेघो वर्षति मृत्युः संहरति च। न कोऽपि तस्य शासनमतिवर्त्तते। जड़धर्म्माणोऽपि चन्द्रार्कादयस्तस्यैव भयात् स्वे स्वे कर्म्मणि प्रतितिष्ठन्ति च ॥ ४ ॥

---

## तृतीयोऽध्यायः ।

१४

**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १ ॥**

नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थी सन् 'सः' ब्रह्मजिज्ञासुः अभयं शिवममृतं ब्रह्म यत् 'तद्विज्ञानार्थं' तस्य विशेषेणाधिगमार्थं 'गुरुं' आचार्य्यं ब्रह्मनिष्ठं शमदमादिसम्पन्नं 'एव' 'अभिगच्छेत्'। 'तस्मै' ब्रह्मजिज्ञासवे 'स विद्वान्' गुरुर्ब्रह्मवित् 'उपसन्नाय' उपगताय 'सम्यक्' 'प्रशान्तचित्ताय' उपरतकामक्रोधादिदोषाय 'शमान्विताय' शमेन इन्द्रियाचाञ्चल्यरहितेन च युक्ताय 'येन' विज्ञानेन यया विद्यया परया 'अक्षरं' अमरत्वात् 'पुरुषं' पूर्णत्वात् 'सत्यं' परमार्थस्वाभाव्यात् 'वेद' जानाति 'तां' 'ब्रह्मविद्यां' 'तत्त्वतः' यथावत् 'प्रोवाच' प्रब्रूयात् ॥ १ ॥

अथान्तेवासी प्रशान्तोपरतचित्तश्च ब्रह्मजिज्ञासार्थं ब्रह्मज्ञमाचार्य्यमभिगच्छेत्। आचार्य्योऽप्यपरामृश्यैव जात्यादिकमुपरतदोषायोपसन्नाय यस्मै कस्मैचिदपि शुश्रूषवे यथावत् ब्रह्मविद्यां प्रब्रूयाच्च ॥ १ ॥

१५

**अपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति अथ परा यया तदक्षरमधिगम्यते ॥ २ ॥**

'अपरा' अश्रेष्ठा विद्या 'ऋग्वेदः यजुर्व्वेदः सामवेदः अथर्व्ववेदः' इत्येते चत्वारोवेदाः । 'शिक्षा कल्पः व्याकरणं निरुक्तं छन्दः ज्योतिषम् इति' अङ्गानि षट् । 'अथ' 'परा' श्रेष्ठा विद्या 'यया' 'तत् अक्षरं' ब्रह्म 'अधिगम्यते' ज्ञायते ॥ २ ॥

ब्रह्म किंस्वरूपं तदीहितं वा कीदृशमिति कार्य्यकारणसङ्घातरूपेऽस्मिन् विकारजाते परिनिष्ठितमस्ति तन्निरूपणं हि परं प्रयोजनं मनुष्याणां । परा हि सा विद्या ययैतत् प्रसाधनीयं ज्ञानमासाद्यते । तद्विपरीता चापरा । ऋक्सामादयश्चत्वारो वेदाः सह शिक्षाकल्पादिभिः षड़ङ्गैरपरेति निरुच्यते । वस्तुतस्तासामन्यासां वा विद्यानां यावता मन्त्राक्षरेण परमात्मतत्त्वमधिगम्यते सैव परेति वेदितव्या च ॥ २ ॥

१६

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ३ ॥

तदक्षरं विशिनष्टि 'यत् तत्' इति वक्ष्यमाणं वुद्धौ संहृत्य सिद्धवत् परामृशति । 'अद्रेश्यम्' अदृश्यं सर्व्वेषां वुद्धीन्द्रियाणां न गम्यम् 'अग्राह्यं' कर्म्मेन्द्रियाविषयं 'अगोत्रं' अनन्वयं 'अवर्णं' शुक्लादयोऽविद्यमाना वर्णा यस्य तत् । चक्षुश्च श्रोत्रञ्च नामरूपविषये करणे सर्व्वजन्तूनां ते अविद्यमाने यस्य तत् 'अचक्षुःश्रोत्रम्' । 'तत्' अपाणिपादं' कर्म्मेन्द्रियरहितं 'नित्यं' अजमविनाशि 'विभुं' व्यापिनं 'सर्व्वगतं'

आकाशवत् 'सुसूक्ष्मं' रूपादिरहितत्वात् 'तत्' न व्येतीति 'अव्ययं' न ह्यनङ्गस्य स्वाङ्गापचयलक्षणोव्ययः सम्भवति शरीरस्येव। नापि पूर्ण-स्वभावस्य गुणद्वारकोव्ययः सम्भवति मनस इव। 'यत्' एवम्भूतलक्षणं 'भूतयोनिं' भूतानां कारणं 'परिपश्यन्ति' सर्व्वतः पश्यन्ति 'धीराः' धीमन्तः॥ ३॥

प्रपञ्चातीतं हि ब्रह्म। न तत् चक्षुषा गृह्यते नापि वा करेण परामृश्यते। अविषयमेव तत् सर्व्वेषामिन्द्रियाणां। ये तु स्थिरधियस्तन्निष्ठास्तएवास्मिन् व्याहृते जगति सर्व्वेषां कारणं तदुपलभन्ते॥ ३॥

१०

एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति। अस्थूल-मनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवायून्वाका-शमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कम-प्राणममुखममात्रम्॥ ४॥

'एतत् वै तत्' न क्षरतीति 'अक्षरं' हे 'गार्गि' गार्गी नाम काचित् ब्रह्मजिज्ञासुः तस्याः सम्बोधनं यत् 'ब्राह्मणाः अभिवदन्ति'। 'अस्थूलं' तत् स्थूलादन्यत् तर्हि अणु न तत् 'अनणु' अस्तु तर्हि ह्रस्वं न 'अह्रस्वं' एवं तर्हि दीर्घं नापि दीर्घं 'अदीर्घं' एतैश्चतुर्भिर्व्विशेषणैः परिमाणं प्रतिषिद्धम्। अस्तु तर्हि लोहितगुणविशिष्टं ततोऽप्यन्यत् 'अलोहितं' भवतु तर्हि अपां स्नेहनं न 'अस्नेहं' अस्तु तर्हि छाया सर्व्वथाप्यनिर्द्देश्य-त्वात् छायाया अप्यन्यत् 'अच्छायं' अस्तु तर्हि तमः 'अतमः' भवतु

वायुस्तर्हि 'अवायुः' भवेत्तर्हि आकाशः 'अनाकाशं' भवतु तर्हि सङ्गात्मकं 'असङ्गं' रसोऽस्तु तर्हि 'अरसं' तथा 'अगन्धम्' अस्तु तर्हि चक्षुष्कं 'अचक्षुष्कं' न हि चक्षुरस्य करणं विद्यते पश्यत्यचक्षुरिति तथा 'अश्रोत्रं' स शृणोत्यकर्ण इति। भवतु तर्हि सवाक् 'अवाक्' तथा 'अमनः' 'अतेजस्कम्' अविद्यमानं तेजोऽस्य न ह्यग्न्यादितेजोवदस्य तद्विद्यते। प्राणोदकः प्राणवायुः प्रतिषिध्यते 'अप्राणं' न ह्यस्य मुखमिति 'अमुखं'। मीयते येन तन्मात्रं न तेन किञ्चिन्मीयते 'अमात्रम्' ॥ ४ ॥

ईश्वरस्तावत् स्थूलसूक्ष्मादिभिरुपाधिविशेषैर्न विशिष्यते। न केनापि परिमाणेन परिच्छिद्यते च। स खल्वलोहितः। न कश्चित् वर्णविकारोऽपि तत्र सम्भवति। स हि न वायुर्नापि वायवीयोनापि वा आप्यस्तथा न स्नेहोनापि रसोनापि च गन्धः। एते खलु गुणाः पराक्रूपस्य जड़प्रपञ्चस्य सहजाः। ईश्वरस्तु जड़ाद्यतिरिक्तोऽतो नास्ति तत्र कश्चिदपि तद्धर्म्मः। अप्राकृतत्वादेव तस्य नापि विद्यते जनिमतामिव पाञ्चभौतिकं रूपं। न सन्ति च प्राणाः करचरणाद्यवयवाश्च। अस्त्यस्माकं चिज्जड़संयोगसमुत्था काचिच्छक्तिः। तयैव वयं पश्यामो व्याहरामः शृणुमश्च। ईश्वरस्तु चिज्जड़ग्रन्थिस्वभावातिरिक्तत्वात् न जीव इव चक्षुषा पश्यति नापि च वाचा व्याहरति। न तस्य चक्षुःश्रोत्रादिकं करणं च विद्यते। न खलु स देहबन्धात् विमुक्तः कश्चित् मनोरूपोऽपि। अमनस्कत्वादेव मनोधर्म्मैर्न सम्बध्यते च। सोऽयमसङ्गः। अतः सांसारिकैः सुखदुःखैर्न लिप्यते। ब्रह्म चेत् न जड़ात्मकं नापि वा मनोरूपं तर्ह्यस्तु तमश्छायाकाशादिवत् किमप्यद्रव्यं। अहो नैतदुपपद्यते नित्यसिद्धे वस्तुनि। तद्धि

सच्चिदानन्दरूपं न केनापि प्रमीयते च। यथा हि मनः सर्व्वथा विषयेभ्यः परं मनसोऽपि तथा परतरोऽयं विज्ञानघनः परमात्मा। न तस्य ज्ञानं मानसमिव वृत्तिमत् अपि तु स्वाभाविकं। तस्य खलु सर्व्वज्ञस्य न नामरूपविषयं करणमस्ति नापि च भूतवस्तुपरिज्ञानार्थं स्मृतिः। स हि एकदैव सर्व्वं विजानाति। स किल कश्चित् मनुष्य इव न रागद्वेषादिभिर्नापि वा दयास्नेहादिभिर्विपरिणम्यते। प्रीत्यादयस्तु तस्य मङ्गलस्वभावस्यान्तरङ्गास्तस्मादेव नित्यं स्यन्द्यमानाः सर्व्वान् प्रीणयन्ति। मानसः स्नेहादिस्तस्मिन्नापेक्ष्यते च। सहि तथाविधं परिणामं सर्व्वथा समतीत्य वर्त्तते। किं वहुना मर्त्त्यानां वृत्तिमत् मितं प्रेम तस्य किल परिच्छेदातीतस्य प्रेम्नः कथमपि तुलामधिगन्तुं नार्हति॥ ४॥

१८

एतस्य वाअक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः॥ ५॥

यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्त्तते एवं 'एतस्य वै अक्षरस्य प्रशासने' हि 'गार्गि' सूर्य्यश्च चन्द्रमाश्च 'सूर्य्याचन्द्रमसौ' अहोरात्रयोर्लोकप्रदीपौ लोकप्रयोजनविज्ञानवता निर्म्मितौ 'विधृतौ' 'तिष्ठतः' वर्त्तते॥ ५॥

इच्छितुस्तस्येच्छनात् सूर्य्योऽशेषभुवनदीपदीपकइव गगनाभोगमध्यगतः स्वेन ज्योतिषा पारिपार्श्विकान् ग्रहादीन् द्योतयति। स्वशक्त्या च तानावृत्तिमार्गे व्यवस्थापयति उज्जीवयति

च स्वतेजसा चतुर्विधान् भूतग्रामान्। ईशितुस्तस्येशनात् सुधांशुरपि खे विचरति। रात्री रात्री च वितन्वन् कामप्यभिख्यां ह्लादयति प्रेक्षकाणां हृदयाणि। भावयति च तुषारकरैरोषध्यादीन्॥ ५॥

१९

एतस्य वाअक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः॥ ६॥

'एतस्य वै अक्षरस्य प्रशासने' हे 'गार्गि' द्यौश्च पृथिवी च 'द्यावापृथिव्यौ' 'विधृते' 'तिष्ठतः'। एतदक्षरं सर्व्वव्यवस्थासेतुः सर्व्वमर्य्यादाविधरणम्। अतोनाक्षरस्य प्रशासनं द्यावापृथिव्यावतिक्रमितुं शक्नुतः॥ ६॥

भूलोकमन्तरेण ग्रशिसूर्य्यादीन्यन्तरीक्षगतानि यावन्ति ज्योतिर्मण्डलानि सन्ति सामान्यतस्तत्सर्व्वं द्युलोक इति हि प्रेक्षावत्प्रसिद्धिः। इयमस्माकमधिष्ठानभूता पृथिवी असावप्यूर्द्ध्वभूमिगतो द्युलोकः सर्व्वेऽपीशितुः शासनमनुमन्यन्ते। रेखामात्रमपि तस्मान्नापसर्पन्ति च॥ ६॥

२०

एतस्य वाअक्षरस्य प्रशासने गार्गि निमेषामुहूर्त्ता-अहोरात्राण्यर्द्धमासामासा ऋतवः संवत्सराइति विधृतास्तिष्ठन्ति॥ ७॥

'एतस्य वै अक्षरस्य प्रशासने' हे 'गार्गि' 'निमेषाः मुहूर्त्ताः अहो-रात्राणि अर्द्धमासाः मासाः ऋतवः संवत्सराः इति' एते कालावयवाः 'विधृताः तिष्ठन्ति' ॥ ७ ॥

ईशितुस्तस्यैषणया प्रतिक्षणमुपस्थापिताः खलु सर्व्वे समा-रम्भाः। न तेषां कोऽपि तत् दुस्तरं शासनमतिवर्त्तितुं सहते च ॥ ७ ॥

२१

एतस्य वाअक्षरस्य प्रशासने गार्गि प्राच्योऽन्यानद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्याः ॥ ८ ॥

तथा 'एतस्य वै अक्षरस्य प्रशासने' हे 'गार्गि' 'प्राच्यः' प्रागयनाः पूर्व्वदिगयनाः 'नद्यः' 'स्यन्दन्ते' स्रवन्ति 'श्वेतेभ्यः' हिमवदादिभ्यः'पर्व्वतेभ्यः' गिरिभ्यः 'प्रतीच्यः' प्रतीचिदिगयनाः 'अन्याः' नद्यः स्यन्दन्ते वङ्क्ष्वः पर्व्वतेभ्यः। यास्ता नद्योयथा प्रवर्त्तिता एवं नियताः प्रवर्त्तन्ते ॥ ८ ॥

तस्यैव शासनात् तुषारक्षौमधवलेभ्योऽभ्रंलिहेभ्यः पर्व्व-तेभ्यः प्रवहमाना अतिजवना नद्यः सर्व्वथा बहूनां स्नानपा-नादिव्यवहारप्रवर्त्तनैरुपकुर्व्वन्ति। अहो खलु तत एव कस्याप्य-दृष्टचरस्यापरिज्ञातपूर्व्वस्य च गिरेः शिरसि तुहिनशकलानि सञ्चितानि सन्ति। वयन्तु दुरात् सुदूरमधिश्रयन्तस्तेभ्यः सुतं स्निग्धं स्वच्छं च तोयं सुखं लभामहे ॥ ८ ॥

२२

योवा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति ॥ ९ ॥

'यः वै' 'एतदक्षरं' हे 'गार्गि' 'अविदित्वा' अविज्ञाय 'अस्मिन् लोके जुहोति यजते तपस्तप्यते' यद्यपि 'बहूनि वर्षसहस्राणि' तथापि 'अन्तवत् एव अस्य' 'तत्' फलं 'भवति' ॥ ९ ॥

मङ्गलस्वरूपमीश्वरमपरोक्षमनुभूय तस्मिन् प्रीतिः कार्य्या। कर्त्तव्यमिति तत्कर्म्म साधनीयं च। तदनेन जीवस्तत्सायुज्य-मक्षय्यफलं च लभते। अथ यदि तं तत्त्वतोऽपरिज्ञाय विषयो-पहितचित्तोऽनुदिनमनेककर्त्तृकारककर्म्मोपचितैर्वाङ्‌डम्बरैरुपास्ते यदि वा लोकसंग्रहार्थं फलाफलं यज्ञादिकमुपहृत्य शरीरं सम-नसा संज्वरयति उच्छिनत्ति च मूलमात्मनो मानैषणया तर्हि वहिर्मुखतया कृतेन न तेन कार्य्यजातेन ब्रह्म सम्बध्यते। नापि तत् फलाय कल्पते च। यस्तु विदितपरतत्त्वस्तत्प्रीत्या तस्य प्रियकाम्यया च निषेवते तत्प्रवर्त्तितं धर्म्मं स खलु लभते तदाचरणफलं चिरमप्यश्नुते च ब्रह्मानन्दं ॥ ९॥

२३

योवाएतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स

**कृपणः । अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥**

'यः वै एतत् अक्षरं' हे 'गार्गि' 'अविदित्वा अस्मात् लोकात् प्रैति' 'स' 'कृपणः' पणक्रीतइव दासः । 'अथ यः एतत् अक्षरं' हे 'गार्गि' 'विदित्वा अस्मात् लोकात् प्रैति' 'सः ब्राह्मणः' ॥ १० ॥

इह हि प्राणिनां मनुष्य एव ब्रह्मणि परे धर्म्मे च नितरां निष्णातः । स खल्वनयोस्तत्त्वबुभुत्सायां सम्भाविताधिकारत्वात् भूमिः सर्व्वगौरवानां । योहि लब्ध्वा च तत् चरमोत्कर्षरूपं मानवं जन्म ब्रह्म न जानीते स एवाग्रेसरो मन्दभाग्यानां । विज्ञाते च तस्मिन् हृत्सरोजमुद्राभञ्जने भगवत्युपचीयमानः कोऽप्यनिर्वाच्यः सान्द्रानन्दसन्दोहो येन खलु हतजीवितेन नासादितः स एव कृपणो दीनश्च । तस्य हि भारवाहिनः पशोरिव निष्फलं जन्म । यस्त्वधिगतपरतत्त्वोऽस्मात् लोकात् प्रैति स एव पुरःसरः सुभगानां सर्व्वेषां गरिष्ठो ब्राह्मणश्च ॥ १० ॥

२४

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतꣳ श्रोत्रमतं मन्तृविज्ञातं विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ॥ ११ ॥**

'तत् वै एतत् अक्षरं' हे 'गार्गि' 'अदृष्टं' न केनचित् दृष्टं अविषयत्वात् स्वयन्तु 'द्रष्टृ' तथा 'अश्रुतं' श्रोत्रस्याविषयत्वात् स्वयन्तु 'श्रोतृ' तथा 'अमतं' मनसोऽविषयत्वात् स्वयन्तु 'मन्तृ' तथा 'अविज्ञातं' बुद्धेर-

विषयत्वात् स्वयन्तु 'विज्ञातृ'। 'एतस्मिन् उ खलु अक्षरे' हे 'गार्गि' 'आकाशः' 'ओतः च प्रोतः च' सर्व्वतोव्याप्त इत्यर्थः ॥ ११ ॥

व्यापारवद्भिश्चक्षुरादिभिर्यदस्माकं ज्ञेयमस्ति तत्सर्व्वमीश्वरो जानीते। यच्च नोऽवेद्यं तदपि स वेत्ति। न स पुनः कस्यापि चक्षुषोविषयो नापि श्रोत्रस्य न वा मनसो नापि च विज्ञानस्य। न स तावदेकान्तेन ज्ञेयोऽन्येषां यथैवात्मानमात्मना वेत्ति। तस्मिन्नतिगभीरज्ञानार्णवे मनुष्याणां परिच्छिन्ना धीरियं कथमप्यवगाहितुं न प्रभवति। यस्त्वपरिमेयमपारमाकाशं परिव्याप्य तिष्ठति तस्य खलु व्यापकतमस्य सिद्धमेवास्ते सर्व्वदेशवृत्तित्वं ॥ ११ ॥

२५

भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्द्धावति पञ्चमः ॥ १२ ॥

'भीषा' भयेन 'अस्मात्' ब्रह्मणः 'वातः पवते' 'भीषा उदेति सूर्य्यः'। 'भीषा अस्मात् अग्निः च इन्द्रः च मृत्युः धावति पञ्चमः'। नियमेनास्य ब्रह्मणोमहार्हाः वातादयः पवनादिकार्य्येषु निरन्तरं प्रवर्त्तन्ते ॥ १२ ॥

तस्यैव शासनमास्थाय वाय्वग्न्यादयः सर्व्वानुपकुर्व्वन्तः स्वे स्वेऽधिकारे प्रवर्त्तन्ते ॥ १२ ॥

२६

यदिदं किञ्च जगत् सर्व्वं प्राणएजति निःसृतं। महद्भयं वज्रमुद्यतं यएतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥

'यत्' 'किञ्च' 'इदं' 'जगत् सर्व्वं' 'प्राणे' परस्मिन् ब्रह्मणि सति 'एजति' कम्पते नियमेन चेष्टते अतएव 'निःसृतं' निर्गतम्। यदेव जगदुत्पत्त्यादिकारणं ब्रह्म तत् 'महद्भयं' महच्च तत् भयञ्च विभेत्यस्मादिति 'वज्रं उद्यतं' उद्यतमिव वज्रं। यथा वज्रोद्यतकरं स्वामिनमभिमुखी-भूतं दृष्ट्वा भृत्या नियमेन तच्छासने प्रवर्त्तन्ते तथेदं चन्द्रादित्यग्रहनक्ष-त्रादिलक्षणं जगत् नियमेनाविश्रान्तं वर्त्तते इत्युक्तं भवति। 'ये' 'एतत्' स्वात्मप्रवृत्तिसाक्षिभूतं एकं ब्रह्म 'विदुः' विजानन्ति 'अमृताः' अमरणधर्म्माणः 'ते भवन्ति' ॥ १२ ॥

इदं तावत् प्रत्यक्षजातमीश्वरात् जायमानं तेनैव मुहु-र्विचेष्टते। अतएव स प्राणः। तदीहामतिवर्त्तितुं न कोऽपि क्षमते। सर्व्वएव तच्छासनात् स्वे स्वे कर्म्मणि प्रतितिष्ठन्ति। यस्तु वलीयसा पापेन भ्रष्टविवेकस्तन्निर्दिष्टां धर्म्ममर्य्यादा-मतिवर्त्तते स वज्रोद्यतकरमिव करालरूपं तं पश्यति। ये तु तं विजानन्ति तेऽप्यमरणधर्म्माणो भवन्ति अक्षय्यमानन्दं च भुञ्जते ॥ १२ ॥

---

## चतुर्थोऽध्यायः।

२७

श्रोतस्य श्रोत्रं मनसोमनोयद्वाचोह वाचम्। सउ प्राणस्य प्राणश्चक्षुषश्चक्षुः ॥ १ ॥

'श्रोत्रस्य श्रोत्रं' अस्ति विद्वद्बुद्धिगम्यं सर्व्वान्तरतमं कूटस्थमजरम-मृतमभयमज' श्रोत्रस्यापि श्रोत्रं तत्सामर्थ्यनिमित्तमिति तथा 'मनसः मनः' 'यत्' ब्रह्म। 'वाचः ह' 'वाचं' वाक् तथा 'सः उ प्राणस्य प्राणः' तथा 'चक्षुषः चक्षुः' ॥ १ ॥

ईश्वरस्तावत् चक्षुःश्रोत्रादीनां करणानां विषयप्रचारहेतुः। तदधिष्ठानादेव तानि च सव्यापाराणि। अतः स श्रोत्रस्य श्रोत्रं मनसो मनो वचसो वाक् प्राणस्य प्राणश्चक्षुषश्च चक्षुरिति निगद्यते। स यथा शक्तिप्रवर्त्तकत्वात् चक्षुःश्रोत्रादीनां मूलभूतोऽपि स्वयं च व्यावर्त्तते तत्तत्स्वरूपपरिणामात् तथा सत्यपि मनः-सामर्थ्यहेतुत्वे स्वयं तु न मनोरूपः। सहि चिदेकरूपः सर्व्वेषां कारणं निधानञ्च ॥ १ ॥

२८

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नोमनोन विद्मोन विजानीमोयथैतदनुशिष्यात्। अन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्व्वेषां ये नस्तद्व्याचचक्षिरे ॥ २ ॥**

यस्मात् श्रोत्रादेरपि श्रोत्रादि ब्रह्म अतः 'न' 'तत्र' तस्मिन् ब्रह्मणि 'चक्षुः गच्छति' तथा 'न वाक् गच्छति' अभिधेयं प्रति वाग्गच्छति ब्रह्म तु अनभिधेयमतोन वाक् गच्छति 'नोमनः' गच्छति। इन्द्रियमनोभ्यां हि वस्तुनोविज्ञानं तदगोचरत्वात् 'न विद्मः' तत् ब्रह्म। इत्यतः 'न विजानीमः' 'यथा' येन प्रकारेण 'एतत्' ब्रह्म 'अनुशिष्यात्' उपदिशेत् शिष्याय। 'अन्यत्' पृथक् 'एव' 'तत्' प्रकृतं ब्रह्म 'विदितात्' ज्ञातात्

वस्तुनः 'अथो' अपि 'अविदितात्' अज्ञातात् 'अधि' इत्युपर्य्यर्थे अन्यत् 'इति' 'शुश्रुम' श्रुतवन्तोवयं 'पूर्व्वेषां' आचार्य्याणां वचनं 'ये' आचार्य्याः 'नः' अस्मभ्यं 'तत्' ब्रह्म 'व्याचचक्षिरे' व्याख्यातवन्तः विस्पष्टं कथितवन्तः ॥ २ ॥

यस्तु शक्तिप्रयोजकत्वेऽपि वाङ्मनश्चक्षुषां सर्व्वथा अविषयएव वर्त्तते स खलु ज्ञाताज्ञातरूपात् सर्व्वस्मादन्य इत्येष एव समयस्तस्मिन् संप्रतिपद्यते। यदस्माभिः सम्यक् ज्ञायते न तत् ब्रह्म। यच्च न ज्ञायते किञ्चिदस्तीति तदपि न ब्रह्म। इह हि ज्ञाताज्ञातानामेव सर्व्वेषां परिमितानामीश्वरएव स्रष्टा पालकश्च। स किल सर्व्वस्मिन्ननुप्रविष्टः सर्व्वस्मादन्यः स्वतन्त्रश्च। एतदेवानुशासनं पूर्व्वाचार्य्याणां ॥ २ ॥

२८

यद्वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ ३॥

'यत्' ब्रह्म 'वाचा' 'अनभ्युदितं' अप्रकाशितं 'येन' ब्रह्मणा 'वाक्' विवक्षितेऽर्थे 'अभ्युद्यते' प्रकाश्यते प्रयुज्यतइत्येतत्। 'तत् एव भूमाख्यं 'ब्रह्म' 'विद्धि' विजानीहि 'त्वं'। 'न इदं' ब्रह्म 'यत्' 'इदं' इन्द्रियमनोग्राह्यं देशकालपरिच्छिन्नं 'उपासते' ॥ ३ ॥

यतोऽधिगतशक्तिर्वाक् प्रवर्त्तते तत् ब्रह्म। यदीशित्वेनाभिधेयं प्रति वाग्गच्छति नतु तत् वाचा प्रकाश्यते। देशकालाभ्यां परिच्छिन्नं इदन्तया निर्द्देश्यं यत्किञ्चित् उपासते लोका न तत् ब्रह्म। एके वाय्वग्निसूर्य्यशिलादीनि अन्ये च तरुगुल्म-

पतगोरगान् अपरे अग्निसूर्य्यादीनि ज्योतिश्चक्राणि इतरे च देवप्रतीकं अन्ये च प्रथितमहिमानं लोकोत्तरशक्तिसम्पन्नञ्च कमपि पुरुषविशेषमीश्वर इति प्रत्युपतिष्ठन्ति। तैस्तैः प्रत्युपस्थापितानामेतेषां तु न किमपि ब्रह्म। तैस्तैरुपासितैः ब्रह्मोपास्तिफलं न केनाप्यासाद्यते च॥ ३॥

३०

यन्मनसा न मनुते येनाहुर्म्मनोमतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ ४॥

'यत्' मनसोऽवभासकं ब्रह्म 'मनसा' 'न' 'मनुते' सङ्कल्पयति मनः 'येन' ब्रह्मणा 'मतं' विषयीकृतं 'आहुः' कथयन्ति ब्रह्मविदः। 'तत् एव' मनसोमनः 'ब्रह्म' 'विद्धि' 'त्वं'। 'न' 'इदं' ब्रह्म 'यत् इदं' परिच्छिन्नं 'उपासते'॥ ४॥

मनसा तु यत्किञ्चित् परिच्छिन्नं वस्तुजातं गृह्यते अपितु न परिच्छेदातीतं चिद्रूपं ब्रह्म। न तत् केन च मनसा अधिगन्तुं शक्यते। तच्च सर्व्वमेव मनुते। यदस्माकं मनीषितं यच्च कर्म्म तदुभयोस्तदेव साक्षी। सति हि सर्व्वावभासके तस्मिन्नतिगहनमपि तमो न शक्नोति दुष्कृतं निगूहितुं नाप्यतिवादस्य सुकृतं॥ ४॥

३१

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणोरूपम्॥ ५॥

अहं सुष्ठु वेद ब्रह्मेति प्रतिपत्तिः मिथ्यैव तदेवेह प्रतिपादितं 'यदि'

कदाचित् 'मन्यसे' 'सुवेद इति' अहं ब्रह्म सुष्ठु वेदेति 'दभ्रं' अल्पं 'एव अपि नूनं' 'त्वं' 'वेत्थ' जानीसे 'ब्रह्मणः रूपम्' ॥ ५ ॥

यो मन्यते सुष्ठु ज्ञातं ब्रह्मेति स खलु किञ्चिदेव वेद तन्निरवद्यस्वरूपं। यतः स न जानीतेऽवाङ्मनोगोचरमपारमतिगम्भीरं तत् न सम्यक्तया कस्यापि ज्ञानविषयं। तेन हि नूनं किमपि मूर्त्तमिव तत् सम्भाव्यते। अप्यस्ति चेत्तस्य ततोऽपि सूक्ष्मावगाहित्वं तर्हि बुद्धेर्व्युत्पत्तिवलात् मन्येत वा स तद्रूपं व्याप्यं मनोवत् अमूर्त्तञ्चेति। न तेन ज्ञातं ब्रह्मणि न विद्यते संसारहेतुः शरीरं नापिच मन इति। अथ तत्र शरीरमनसोः सम्बन्धश्चेत् स्वीक्रियेत तर्हि तत् सर्व्वेषां प्रेक्षाविषयतामापद्येत मानसव्याप्यताञ्चर्च्छेत्। उत्प्रेक्षितञ्च बहुभिः ब्रह्मणि मूर्त्तिपरिच्छेदो नास्तीत्यपितु तत्र पुनर्नामरूपविषयं मनो वर्त्तत इति। अतस्ते खलु तत्र शुद्धबुद्धौ मनोधर्म्ममध्यास्य रागद्वेषक्रोधेर्षादिरूपं मनोविकारं स्वीकुर्व्वते। सत्यपि रागद्वेषादौ नूनं तत् सर्व्वेषां सम्यक्त्वेन ज्ञानविषयतामभ्युपगच्छेत्। अतो यस्तु मनुते सुष्ठु ज्ञातं ब्रह्मेति स खलु तस्मिन् मनोधर्म्ममध्यासयति। ततोऽपि च योऽसम्यक्दर्शी तेन तत्र शारीरधर्म्ममध्यारोप्यते। मनस्तावत् अतीव सूक्ष्ममतीन्द्रियञ्च। यच्च ततोऽपि सूक्ष्मतरं यस्मिंश्च मानसपरिणामः सर्व्वथा निवार्य्यते तत् कथमस्माभिः सुविदितं भवेत्। यत्तु सर्व्वरहस्याधिष्ठानस्य नानारचनारूपस्य जगतः कारणं अपि विद्यतएव तस्मिन्नतिगम्भीरं ज्ञानं। मनुष्याणां जन्यं ज्ञानमिव तदिदं किंस्वित् परिच्छिन्नं उताहो बुद्धिग्राह्यं। येन च जायमानं जगत् नित्यं सन्धार्य्यते ज्ञायते च

तत्तोभे सृष्टिस्थितिशक्ती विद्येते एव। सा खल्वनिर्वाच्या शक्तिरस्मद्विहप्रभवेव किं परिमिता अस्माभिर्मनसा विकल्पनीया चेति। अथ यन्निसृष्टं प्रेम जगतां क्षेमाय कल्पतेऽपि किं तत् मनुष्याणां मनोजन्यमिव नितरां फल्गुतया प्रकाशते। अहो तद्दुरवगाहमतिगम्भीरं प्रेम न केनापि बुद्ध्या परिमीयते ॥ ५ ॥

३२

नाहं मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ ६ ॥

'न अहं मन्ये सुवेद' ब्रह्म 'इति' नैवं तर्हि विदितं त्वया ब्रह्मेत्युक्त आह 'नो न वेद इति' वेदवेति 'वेद च' नो। 'यः' कश्चित् 'नः' अस्माकं मध्ये 'तत्' उक्तं वचनं तत्त्वतः 'वेद' सः 'तत्' ब्रह्म 'वेद'। किं पुनस्तद्वचनमित्याह 'नो न वेदेति वेद च' इति ॥ ६ ॥

नो न वेदेति मन्त्राक्षररूपस्य वाक्यस्यायमेवार्थः सङ्गच्छते प्रतिपित्साविषयस्य ब्रह्मणः स्वरूपाववोधो न किञ्चिदपि ममास्तीति न। ज्ञानपरिपाकेणाहं तदनाद्यनन्तसुन्दरपूर्णस्वभावमवेदिषं नत्वशक्नुवम् दृश्यं विषयमिव बुद्ध्या सम्यक् अधिगन्तुमिति। येन खलु भाग्यवता विज्ञानप्रकाशेन तत्सत्यस्वरूपमपरोक्षीकृत्य तस्य पूर्णस्वभावत्वमभ्युपगतं तेनैव विदितं मन्त्रवर्णस्य किं वाच्यं ॥ ६ ॥

३३

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ७ ॥

'यस्य' ब्रह्मविदः 'अमतं' अविज्ञातं अविदितं ब्रह्मेति 'तस्य' 'मतं' ज्ञातं सम्यक् ब्रह्मेत्यभिप्रायः । 'यस्य' पुनः 'मतं' ज्ञातं विदितं मया ब्रह्मेति निश्चयः 'न' ब्रह्म 'वेद' विजानाति 'सः' । 'अविज्ञातं' अमतं अविदितमेव ब्रह्म 'विजानतां' सम्यक् विदितवतामित्येतत् । 'विज्ञातं' विदितं ब्रह्म 'अविजानतां' असम्यग्दर्शिनां ॥ ७ ॥

यो वेत्ति ब्रह्मणोरूपं न तावत् बुद्धिग्राह्यं तेनैव ज्ञातमनाद्यनन्तादिभूमस्वभावत्वं तस्य । यस्य च विदुषो विज्ञानचक्षुषि ब्रह्मणः पूर्णरूपत्वं प्रत्यक्षवत् प्रतिभासते सएव जानाति तस्य स्वरूपसम्पत्तिरनन्तेति ॥ ७ ॥

३४

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृताभवन्ति ॥ ८ ॥

'इह' एव 'चेत्' यदि मनुष्यः 'अवेदीत्' विदितवान् यथोक्तलक्षणं ब्रह्म 'अथ' तदा 'अस्ति' 'सत्यं' परमार्थतः । 'इह' जीवन् 'चेत्' यदि 'न' 'अवेदीत्' विदितवान् 'महती' दीर्घा 'विनष्टिः' विनशनं । तस्मादेवं गुणदोषौ विजानन्तः 'भूतेषु भूतेषु' स्थावरेषु चरेषु च एकं ब्रह्म 'विचिन्त्य' विज्ञाय साक्षात्कृत्य 'धीराः' धीमन्तः 'प्रेत्य' उपरम्य 'अस्मात् लोकात्' 'अमृताः भवन्ति' ॥ ८ ॥

किमपि व्याप्यमिव न तावत् ब्रह्म बुद्धिग्राह्यं । अस्त्यस्माकं बुद्धेः प्रतिष्ठाभूतं सहजं ज्ञानं । तेनैव वयं कारणं सर्व्वेषां कारणानां मूलं सर्व्वेषामधिकरणानां निदानञ्च श्रेयसां ब्रह्म

सम्प्रतिपद्यमानाः व्यक्तं जानीमहे तस्य पूर्णमङ्गलस्वरूपत्वमिति। किञ्च वयं विधौते च मलीमसि पापे विज्ञानात्मनि तदनन्तं शिवं सुन्दरं पुरुषं सर्व्वाश्रयमिति ज्ञात्वा नूनमुपलभामहे। अहो इहस्थितैरस्माभिः ब्रह्म विदितं चेत् तर्हि गर्भवासफलं सम्यक् समासादितं। एतदेव हि निरतिशयं कारुण्यं यत् वयमविद्यो-पहतास्तत्परिज्ञानाय तेनैव व्रियामहे। इह हि नास्त्यतः किमपि भाग्योपचयफलं यत् घनान्धकारे पथि दन्द्रम्यमाणै-र्मर्त्यैरप्यस्माभिः स सर्व्वान्तरः पुरुषोऽधिगम्यते। अहो वयं व्याकृतानां जगतां दुर्विगाह्यरहस्यानुमानेन स्रष्टुः परिच्छेदा-तीतं ज्ञानं नियमप्राकाम्यपरीक्षया च नियन्तुः शुभोदर्कां समीहां सम्भावयाम। निर्वर्ण्य च सवहुमानं तस्य सार्व्व-जनीनं प्रेम स्वेदपुलकवेपथुपरिगृहीतास्तं निस्पृत्यूहं सभा-जयामहि। स्वाचरितैस्तत्प्रवर्त्तितैर्धर्म्मैरात्मनोभूतये च प्रभ-वाम। किं वहुना नोख्येतान्युक्तानि सपरिकराण्यकृतानि चेत् तर्हि किं कृतमस्माभिः। सञ्चिन्वन् मुक्तामणिप्रवेकान वितन्वन् दिगन्तप्रथितानि यशांसि निर्विशंश्च भोग्यं विषयजातं न जाने का मे प्रीतिरुपजायते। अथ कस्मिंश्चित् भङ्गप्रवणे मृदात्मके उत वा गुणदोषकवलितेऽपूर्णे वस्तुनि परिनिष्ठिता प्रीतिः किं फलाय कल्पते। अविदित्वातु ब्रह्म अननुभूय च तत्संवन्धीत्थं नित्यं भूमानन्दं योहि पार्थिवं हीनञ्च सुखं वहुमन्यते सोऽनर्थं-मृच्छति प्रैति च दूरात् सुदूरं पुण्यलोकात्।

इह हि श्रेयस्कामः पुरुषः परिनिहितं स्रष्टुः समीहितं सृष्टि-रहस्यं च पर्य्यालोच्य ब्रह्मज्ञानमुद्दीपयेत्। सर्व्वज्ञानवीजमात्म-

प्रत्ययमपि विवर्द्धयेच्च। इमानि तावत् सर्व्वाणि चराचराणि सर्व्व-ब्रह्मणा निर्म्मितानि। डिण्डिमायतेऽस्मिन् विकारजाते तस्यैव महत्त्वं धन्यं पुण्यञ्च नाम। अहो देहात्मस्वर्भूम्यादिकमधिकृत्य यत्यत् तत्त्वशास्त्रं प्रवर्त्तितं तत्तत् सर्व्वं तस्यैवातिगभीरं ज्ञानं शुभोत्तरामीहां च द्योतयति। निर्मथ्य चेमं शास्त्रसिन्धुं सर्व्वविद्याप्रतिष्ठाभूतं ब्रह्मज्ञानमुद्धरेत्। स्वयमपि च ब्रह्मवित्तो भवेत्। अथ यथाकालं विसृज्येमं लोकं लब्ध्वाचामरणधर्म्माणं पुरुषं अमृतत्वञ्चर्च्छति॥ ८॥

---

## पञ्चमोऽध्यायः।

३५

ईशावास्यमिदꣳ सर्व्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनं॥ १॥

ईष्टे इति ईट् तेन 'ईशा' परमेश्वरेण 'आवास्यं' आच्छादनीयं 'इदं सर्व्वं' 'यत् किञ्च' यत् किञ्चित् 'जगत्यां' ब्रह्माण्डे 'जगत्' तत् सर्व्वं। 'तेन त्यक्तेन' पापेषणात्यागेन 'भुञ्जीथाः' परमात्मानं 'मा गृधः' गृधिमाकाङ्क्षां मा कार्षीः त्वं 'धनं' 'कस्यस्वित्' कस्यचित्॥ १॥

यथा च केनचित् विहगेन वातवर्षादिभ्यस्त्रातुं पक्षपुटाभ्यामाव्रियते डिम्भस्तथैव नानानर्थसङ्कटेभ्योऽवता परमेश्वरेणेदं ब्रह्माण्डं कारुण्येन प्रावृतं। सहि सर्व्वेषामधिपतिः सर्व्वेषां वस्तुजनयिता पालकश्च। विजृम्भते च जगति तस्य निर्विशेष-

प्रवृत्तं शासनं परितो व्याप्तं च प्रेम । अहो यूयं विहाय पापबुद्धिं विसृज्य च विषयस्नेहं तत्प्रेमपीयूषनिर्य्यूहैर्मोदध्वं । यथा हि रोगः सर्व्वेषां शारीरविकारः पापमपि तथा मनसः । रुग्ने च शरीरे यथा अन्नाहारप्रवृत्तिरपचीयते पापभारभुग्ने मनसि च तथा ब्रह्मानन्दभोगरुचिः । अतः श्रेयस्कामः पापानां खलु वार्त्तामपि परित्यज्य पूतेन प्रसन्नेन च मनसा ब्रह्मानन्दमश्नीयात् । यथाच कश्चित् कृतापराधोऽसन्निष्ठः पुत्रः पितुः प्रीणनाय न कल्पते नापि विन्दते तत्वात्सल्यं वेपते च नित्यं दण्डभयात् एवमुत्पथप्रतिपन्नो हि पुरुषो नित्यप्रवृत्तेन पापेन व्यतिक्रान्तधर्म्ममर्य्यादो विधातृविहितैः स्मर्य्यमाणैरपि भीषणैः शासनैर्नितरां सीदति । स खलु निर्वर्ण्य तस्य शान्तं शिवं पावनञ्च रूपं न शक्नोति तत्प्रेमामोदेन पापजर्ज्जरितं दुर्ललितञ्च चित्तं मादयितुं । अतो येनेषितं ब्रह्म स पुनः सर्व्वथा विषयैषणां विसृजेत् श्रेयःपरिपन्थिनं पापसंकल्पं विगीतां तत्वार्त्तामपि परित्यजेत् । न कमपि निगृह्णीयात् न सस्पृहं परस्त्रियं पश्येत् नापिच परस्वं ॥ १ ॥

२६

**अनेजदेकं मनसोजवीयोनैनद्देवाआप्नुवन् पूर्व्वमर्षत् ।**
**तद्धावतोन्यानत्येति तिष्ठत्तस्मिन्नपोमातरिश्वा दधाति ॥२॥**

'अनेजत्' न एजत् एजृ कम्पने कम्पनं चलनं स्थिरत्वप्रच्युतिः तद्विवर्ज्जितं । 'एकं' प्रज्ञानघनं 'मनसः' 'जवीयः' जववत्तरं मनसा तदप्राप्यमित्यर्थः । द्योतनात् 'देवाः' चक्षुरादीनि इन्द्रियाणि 'एनं' एतत् प्रकृतं ब्रह्म

सर्व्वस्थं 'न' 'आप्नुवन्' प्राप्नवन्तः 'पूर्व्वं अर्षत्' पूर्व्वमेव गतं जवनात् मनसोऽपि । 'तत्' ब्रह्म 'धावतः' द्रुतं गच्छतः 'अन्यान्' मनोवागिन्द्रियप्रभृतीन् 'अत्येति' अतीत्य गच्छतीव 'तिष्ठत्' स्वयमविक्रतमेव सत् । 'तस्मिन्' ब्रह्मणि सति 'मातरिश्वा' मातरि अन्तरीक्षे श्वयति गच्छतीति वायुः सर्व्वप्राणभृत् 'अपः' कर्म्माणि प्राणिनां चेष्टालक्षणानि 'दधाति' विभजतीत्यर्थः । सर्व्वाहि विक्रियाः सर्व्वास्पदभूते नित्ये ब्रह्मणि सत्येव भवन्तीत्यर्थः ॥ २ ॥

पूर्व्वदेशादुत्तरदेशावाप्तिश्चलनं। केवलं हि ब्रह्म स्वेन महिम्ना सममेव सर्व्वत्र चकास्ति। सर्व्वदेशवृत्तित्वाच्च पूर्व्वदेशादुत्तरदेशावाप्तिरूपं चलनं तस्मिन्न सम्भवति। अतस्तदचलं। अचलमपि सर्व्वथा मनसो जवीय एवास्ते। न मनसा तदवाप्तं नापिच करणजातैः। स्थाणुवत् स्थिरमपि तत् रंहसा गृहीतुमीहमानान्येतानि मनश्चक्षुरादीन्यतीत्यैव वर्त्तते। सति हि वायौ सर्व्वथा प्राणिनश्चेष्टन्ते। तं विना अचिरेणैव ते वैक्लव्यमुपयान्ति। वायुस्तु यस्माल्लब्धशक्तिः प्रवर्त्तते तस्मिन् असति कारणे कस्य वा शक्त्या व्याप्रियेत। अतः सुष्ठूक्तं ब्रह्मणोऽधिष्ठानादेव वायुः प्राणिनां कर्म्माणि विधत्ते ॥ २ ॥

३७

### तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
### तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य वाह्यतः ॥ ३ ॥

'तत्' ब्रह्म यत् प्रकृतम् 'एजति' चलति 'तत्' एव च 'न एजति' नैव चलति अचलमेव सत् चलतीत्यर्थः । किञ्च 'तत् दूरे' 'तत् उ

अन्तिके' समीपेऽत्यन्तमेव । न केवलमन्तिके 'तत्' 'अन्तः' अभ्यन्तरे 'अस्य सर्व्वस्य' जगतः । 'तत्' 'उ' अपि 'सर्व्वस्य अस्य वाह्यतः' व्यापकत्वात् आकाशवत् ॥ ३ ॥

अनवाप्तदेशावाप्तिरेव फलं गमनव्यापारस्य । सर्व्वगतत्वाच्च ब्रह्मणि सिद्धमेव तत्प्रयोजनं । अत उक्तं तदेजति । न तस्य गमनं प्रयत्नसाध्यं अपितु तत् सिद्धमिव आस्ते । स खलु भूमा परमेश्वरो नापि जड़वत् स्तब्धो नापि मृतवत् निश्चेष्टश्च । स हि प्राणोऽमरणधर्म्मा च । नित्यमुक्तो महानात्मा च । अलुप्तचित्प्रकाशत्वेन नित्यं जागर्त्ति चिरं च जीवति । यथा च कश्चित् पुरुषो देशात् देशान्तरं व्रजति नेदृशं तस्य गमनं । अविक्रियत्वात् ध्रुवत्वाच्च तस्मिन् विक्रियावत् गमनमनुपपन्नमेव । स किल पूर्णेन प्रकाशेन सर्व्वत्र राजते । दविष्ठे च नचत्रे तिष्ठति । न स केवलं दूरात् सुदूरेऽपि त्वस्माकमन्तिकेऽन्तर्हृदये वहिरपि च वरीवर्त्ति । यथा च केनचित् दण्डधरेण राज्ञा वरासनमधिष्ठाय स्वराष्ट्रं प्रशास्यते नैवं ब्रह्मणा किमपि व्याप्यं स्थानमास्थीयते । तच्च एकदैव सामान्यतः सर्व्वमभिव्याप्य विश्वव्यवहारं प्रवर्त्तयति ॥ ३ ॥

३८

यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्व्वभूतेषु चात्मानन्ततोन विजुगुप्सते ॥ ४ ॥

'यः तु' मुमुक्षुः 'सर्व्वाणि भूतानि' परमे 'आत्मनि' ब्रह्मणि 'एव अनुपश्यति' 'सर्व्वभूतेषु च' परमं 'आत्मानं' निर्व्विशेषं ब्रह्म पश्यति ।

सः 'ततः' तस्मात् एव दर्शनात् 'न विजुगुप्सते' जुगुप्सां घृणां न करोति ॥ ४ ॥

इदन्तावत् विकारजातं परमात्मनि संप्रतिष्ठते। स खलु निधानं तस्य। तमाश्रित्य तत् वर्त्तते। यस्तु भूतजातं परमे आत्मनि तस्मिंश्च तमनुपश्यति न स कमप्यवजानीते। विदितं हि तेन सर्व्वेऽपि वयं तत्प्रभवाः। न कोऽपि तस्य गर्ह्यस्त्यज्यो-वेति। अतः स न कमपि जुगुप्सते योग्यतापुरस्कारेण यथानु-रूपं सर्व्वान् सम्भावयति च ॥ ४ ॥

३९

सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्। कविर्म्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छा-श्वतीभ्यः समाभ्यः ॥ ५ ॥

'सः' परमात्मा 'पर्य्यगात्' परि समन्तात् अगात् गतवान् आकाशवत् व्यापीत्यर्थः 'शुक्रं' शुक्रः शुद्धः 'अकायम्' अकायः अशरीरः 'अव्रणम्' अव्रणः अक्षतः 'अस्नाविरम्' अस्नाविरः स्नावाः शिराः यस्मिन् न विद्यन्ते इति 'शुद्ध' शुद्धः निर्म्मलः 'अपापविद्धम्' अपापविद्धः। 'कविः' क्रान्तदर्शी सर्व्वदृक् 'मनीषी' मनस ईषिता सर्व्वज्ञ ईश्वरइत्यर्थः 'परिभूः' सर्व्वेषामुपर्य्युपरि भवतीति। स्वयमेव भवतीति 'स्वयम्भूः'। सः नित्यमुक्तईश्वरः यथातथाभावोयाथातथ्यं ततः 'याथातथ्यतः' यथाभूत-कर्म्मसाधनतः 'अर्थान्' फलानीत्यर्थः 'व्यदधात्' विहितवान् यथानुरूपं अभजदित्यर्थः 'शाश्वतीभ्यः' नित्याभ्यः 'समाभ्यः' संवत्सराख्येभ्यः प्रजाभ्यः प्रजापतिभ्यइत्यर्थः ॥ ५ ॥

व्योमवत् व्यापित्वात् ब्रह्म सर्व्वत्रैव वर्त्तते। तत् खलु निर्म्मलमसङ्गञ्च। असङ्गत्वादेव तत् न केनापि कर्म्मणा लिप्यते नापि च मलिनिमानमापद्यते। तदमूर्त्तं। अमूर्त्तत्वाच्च न विद्यन्ते तस्य करचरणाद्यवयवाः नापि च वेदनाव्याधिव्रणादयो विकाराः। तदमनस्कं। तस्माच्च पापानुशयरूपो विकारोऽपि तस्मिन् नास्ति। यथा च वयं पापदहनैर्दह्यन्ते व्याधिभिः पीड्यन्ते आधिभिश्च कदर्थीक्रियन्ते न तथा अविकार्य्यं ब्रह्म। नास्ति तत्र आधिव्याध्युपतापादीनां कोऽपि प्रसरः। तत् किल शुद्धमपापविद्धञ्च। सर्व्वदृक् कविश्च। किञ्च केन्द्रस्थं मार्त्तण्डं परितः भ्राम्यमाणानां ज्योतिर्म्मण्डलानां व्यवस्थापिता या हि मर्य्यादा अखण्डकलस्य सुधांशोर्नेत्रनिर्व्वाणकारिणी या च कान्तिः सुगृहीतस्य ज्ञानस्य सुचीर्णस्य च धर्म्मस्य लोकोत्तरं यच्च माधुर्य्यं अहो तत्सर्व्वमेव जगत्योनेस्तस्याचिन्त्यरूपं निर्म्माणपाटवमभिव्यनक्ति। तत् किल मनीषी यमयति च मनः सर्व्वेषां। तेन हि विचित्रवर्णाकृतयः सर्व्वे जन्तवस्तावदुच्चावचै-र्मनोधर्म्मैः सम्प्रतिपन्नाः कृताः। व्यवसितेनानेन पुनस्तदेव लक्ष्यते यथा च ते तत्तद्धर्म्मवशगाः सुखं वर्त्तयिष्यन्तीति। अपि च तेन खलु कारुणिकेन मनुष्याणां चित्तं केनचित् दुर्विपाट्येन नियमसूत्रेण सुसनद्धं। तद्बलेन नीयमानास्ते पुष्कलेन ज्ञानेन धर्म्मसन्तत्या च नितरामुपचीयन्ते। तेषामात्मापि च नित्यो-त्थानवान् भवति। अहो प्रेयान् तावदयं तस्य। तेन खलु भगवता अस्मिन् आत्मनि प्रणिहितो यो धर्म्मसमयस्तेनैव स मोहगहनं तीर्णो जरामरणमप्यपहाय च ब्रह्मानन्दमश्नीयात्।

स हि सर्व्वथा पापात्मानं शास्ति प्रसादसमुखः पुरस्करोति च पुण्यश्लोकं । स किल सर्व्वान् अतीत्य तिष्ठति। तेनैव सर्व्वे पदार्थाः समुत्पादिताः प्रकाशिताश्च । न स जायते न पुनः सृज्यते नापि च केन प्रकाश्यते । स हि स्वयंज्योतिरनादिर्विधत्ते च नित्यं सर्व्वेषां कर्म्मानुबन्धीनि फलानि । इह हि यावन्तः स्वेदज-प्रभृतयो जीवाः सन्ति यावद्भिर्वा अणुप्रमाणैर्दुर्लक्ष्यैश्च प्राणिभि-र्जलस्थलव्योमानि विवरगह्वराणि च निचितानि तेषामन्न-पानादिकं यथाभिरुचितं चिरं सएव विदधाति । ते च तल्लब्ध्वा यथासुखं वर्त्तन्ते ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

४०

### तपसा ब्रह्म विजिज्ञासस्व । ब्रह्मविदाप्नोति परम् ॥१॥

'तपसा' मनसएकाग्रतया 'ब्रह्म' 'विजिज्ञासस्व' विशेषेण ज्ञातु-मिच्छस्व । 'ब्रह्मवित् आप्नोति' 'परं' ब्रह्म ॥ १ ॥

जिज्ञासुस्तावदभीक्ष्णमेकाग्रमनसा ब्रह्म विभावयेत् । शान्तः समाहितश्च विज्ञानचक्षुषा तत् शिवसत्यस्वरूपं निरूपयेत् । अनेनैव हि स तत् लब्धव्यं समुपलभ्य प्रकामयामकामो निर्वृ-तश्च भविष्यति । किञ्च व्यापकत्वात् ब्रह्म सर्व्वेषामन्तर्बहिश्च समभेव विद्यते । तीर्थाटनादिकं न तदधिगमे हेतुः । तद

पारोक्ष्यमेव तत्प्राप्तिः। इह हि भाग्योपचयेन या ब्रह्म-जिज्ञासा समुत्पद्यते न सा निरवधिना कालेनापि पर्य्यवसीयेत। लोकात् लोकं जुषमाणानां यावती हि तत्त्वप्रतिपत्तिस्तावदेव तेषां परानन्दजातं सान्द्रतरं भविष्यति ॥ १ ॥

४१

सत्यं ज्ञानमनन्तं ब्रह्म योवेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता ॥ २ ॥

'सत्यं' ब्रह्म 'ज्ञानं' ब्रह्म 'अनन्तं' ब्रह्म 'यः' 'वेद' विजानाति 'निहितं' स्थितं 'परमे' 'व्योमन्' व्योम्नि देहाकाशे 'गुहायां' आत्मनि। 'सः' एवं ब्रह्म विजानन् 'अश्नुते' भुंक्ते 'सर्व्वान्' 'कामान्' भोगान् 'ब्रह्मणा' 'विपश्चिता' मेधाविना सर्व्वज्ञेन 'सह' ॥ २ ॥

सत्यं हि ब्रह्म। तच्च सत्यस्य सत्यं सत्यस्य परमं निधानं च। तत्सत्यतामुपाश्रित्य सर्व्वे खलु सत्पदार्थाः प्रतिभासन्ते। तदेव खलु त्रिकालापरिच्छेद्यं सत्यं ध्रुवं नित्यञ्च।

यत्तु स्वसाक्षिकं तदेव ज्ञानं। तद्विपरीतस्तु जड़ः। मृच्छिलापादपादीनां नास्ति तादृकविधं ज्ञानं तस्मात्ते जड़ा इत्युच्यन्ते। विज्ञानात्मा ब्रह्म चोभावपि स्वपरसाक्षिना चित्-प्रकाशेन सम्पन्नौ। तस्मात्तौ ज्ञानस्वरूपाविति हि स्थितिः। तयोरपि स्वप्रकाशरूपस्य ब्रह्मणो ज्ञानं स्वाभाविकं व्यापकञ्च। विज्ञानात्मनस्तु तत् खलु वृत्तिजन्यं व्याप्यं च। इत्यनयो-

विशेषः। किञ्च जीवस्य तूभे विद्याविद्ये विद्येते अविद्यापरिकल्पितौ च भ्रान्तिमोहौ। परात्मनि तु तदुभे न स्तः। स च विज्ञानघनः शुद्धबुद्धमुक्तस्वभावश्च।

अनन्तं ब्रह्म। ज्ञानेन शक्त्या मङ्गलेन च तन्न परिच्छिद्यते नापि च देशकालाभ्यां।

यः खल्वात्मनि निहितं तत् ज्ञानघनं ब्रह्म वेद तदीहितं कुरुते च स तेनैव सह सर्व्वान् कामान् भुङ्क्ते। यथा ह्यस्मिन्ननेककर्त्तृभोक्तृस्वरूपे जगति ब्रह्मणोऽत्युदारा प्रेमपूर्णा प्रगल्भा च दृष्टिर्विजृम्भते तथा तस्यापि। यथा च तत् खल्वतीन्द्रियाणां कृमिकीटानामपि शुभमीहते तथा सोऽपि। किं बहुना यच्च समीहितं ब्रह्मणः सर्वेष्वप्यवस्थापरिणामेषु तस्याप्येव तत्। साधर्म्म्येणानेनैव तद्वत् सोऽप्यमोघसङ्कल्पो भवति अश्नुते च सर्व्वान् कामान् सह तेन बहुमन्यते च तस्यैव सख्यं दास्यं मोदते च तत्संस्पर्शेन ॥ २ ॥

४२

यः सर्व्वज्ञः सर्व्ववित् यस्यैष महिमा भुवि दिव्ये। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति॥३॥

'यः सर्व्वज्ञः सर्व्ववित्' 'यस्य' 'एषः' प्रसिद्धः 'महिमा' 'भुवि' लोके 'दिव्ये' द्युलोके। कोऽसौ महिमा स्थावरं जङ्गमञ्च यस्य प्रशासने नियतमस्ति। तथार्त्तवोऽयनेऽब्दाश्च यस्य शासनं नातिक्रामन्ति। तथा कर्त्तारः कर्म्माणि फलञ्च यच्छासनात् स्वं स्वं कालं नातिवर्त्तन्ते। 'तत्' ब्रह्म 'विज्ञानेन' विशिष्टेन ज्ञानेन 'परिपश्यन्ति' सर्व्वतः पूर्णं पश्यन्ति उप-

लभन्ते 'धीराः' विवेकिनः 'आनन्दरूपं' सुखस्वरूपं 'अमृतं यत्' 'विभाति' विशेषेण अन्तर्व्वाह्ये सर्व्वत्रैव भाति ॥ ३ ॥

ईश्वरः खलु सामान्यतो विशेषतश्च सर्वं वेत्तीत्यतः सर्व्ववित् सर्व्वज्ञश्च। यानि खल्वमूनि तावदगणितानि ज्योतिर्भुवनानि इयमप्यस्माकमधिष्ठानभूता भूः एषु सर्व्वेष्वपि लोकेष्वेतावानेव तस्य महिमा। सहि सर्व्वत्र प्रकाशतेऽमृतानन्दरूपेण। धीराः खलु तद्विज्ञानप्रकाशेनाम्भोधेर्हिण्डीरपाण्डुरेषु तरङ्गेषु जवगामिनीनां नदीनां वीचिमालासु उदयास्तमनवेलायां चन्द्रार्कयोः प्रभापटलेषु मनुष्याणां मुखाम्भोजेषु पतिदेवतानां विमले प्रेम्णि सर्व्वेषामपि भूतानामन्तर्वहिश्च तमेव भगवन्तमनुपश्यन्ति ॥ ३ ॥

४३

हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदोविदुः ॥ ४ ॥

'हिरण्मये' ज्योतिर्म्मये विज्ञानप्रकाशे आत्मनि 'परे' परस्मि अभ्यन्तरत्वात् तस्मिन् 'कोषे' कोषइव असेः ब्रह्मोपलब्धिस्थानत्वात् तस्मिन् 'विरजं' अविद्यादिदोषरजोमलवर्ज्जितं 'ब्रह्म' सर्व्वमहत्त्वात् 'निष्कलं' निर्गताः कलाः यस्मात् तत् निरवयवमित्यर्थः। 'तत्' 'शुभ्रं' शुद्धं 'ज्योतिषां' सर्व्वप्रकाशात्मनां आदित्यादीनामपि 'ज्योतिः' अवभासकम्। 'तत्' हि परं ज्योतिः परं ब्रह्म 'आत्मविदः' आत्मानं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनोविदुः जानन्ति ते 'यत्' विदुः जानन्ति ॥ ४ ॥

ज्ञानदीपिते धर्म्मपूते चात्मनि किल ब्रह्म सुष्ठु प्रकाशते। अतोऽयमस्माकमात्मा तस्याधिष्ठानं कोष इति निरुच्यते। तत् खलु निर्म्मलं ज्योतिषां ज्योतिः प्रकाशस्वभावमात्मनोऽवभासकं च। न विद्यते तस्येन्द्रियगोचरं किमपि रूपं। ब्रह्मविदएव ज्ञानपरिपाकेणात्मनि तत् परिपश्यन्ति ॥ ४ ॥

४४

न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति ॥ ५ ॥

'न' 'तत्र' तस्मिन् ब्रह्मणि सर्व्वावभासकोऽपि 'सूर्य्यः' 'भाति' तद्-ब्रह्म न प्रकाशयतीत्यर्थः। 'न चन्द्रतारकं' 'न इमाः विद्युतः भान्ति' 'कुतः अयं अग्निः' अस्मद्गोचरः। यदिदं जगत् भाति तत् 'सर्व्वं' 'तम् एव' परमेश्वरं 'भान्तं' दीप्यमानं 'अनुभाति' अनुदीप्यते। 'तस्य भासा' दीप्त्या 'सर्व्वम् इदं' सूर्य्यादि जगत् 'विभाति' ॥ ५॥

न तावत् ब्रह्म सूर्य्याचन्द्रमसोर्भासा अवभास्यते अपित्वात्म-ज्योतिषा प्रकाश्यते। सत्यपि सर्व्वावभासके तस्मिन् सर्व्वं खलु विभाति। असति च न कोऽपि सत्तां लभते ॥ ५ ॥

४५

प्राणोह्येषयः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी। आत्मक्रीड़आत्मरतिः क्रियावानेषब्रह्मविदां वरिष्ठः ॥ ६ ॥

'प्राणः हि' 'एषः' परमेश्वरः 'यः' सर्व्वभूतैः' सर्व्वभूतस्थः 'विभाति'। 'तं' 'विजानन्' विद्वान् 'अतिवादी' परंब्रह्म अतीत्य वदितुं शीलमस्येति 'न' 'भवते' भवति। यएवं प्राणस्य प्राणं साक्षात् वेद सोऽतिवादी न भवतीत्यर्थः। किञ्च परमात्मन्येव क्रीड़ा क्रीड़नं यस्य सः 'आत्मक्रीड़ः' परमात्मन्येव रतिः रमणं यस्य सः 'आत्मरतिः' शुभक्रिया विद्यते यस्य सः 'क्रियावान्'। यः एवं लक्षणोऽनतिवाद्यात्मक्रीड़आत्मरतिः क्रियावान् ब्रह्मनिष्ठः सः 'एषः' 'ब्रह्मविदां सर्व्वेषां 'वरिष्ठः' प्रधानः॥ ६॥

अविद्यमाने च सर्व्वकारणे सर्वाश्रये ब्रह्मणि न किमपि सत्तं स्फूर्त्तिमदुपलभ्येत। अतस्तदेव प्राणः। नभसि भ्राम्यमाणानां ज्योतिर्गणानां पुष्कलानां तरुगुल्मानां स्फूर्त्तिभाजां पशूनां सर्व्वेषामपि भूतानां ब्रह्मैव कारणं प्रतिष्ठा च। किञ्च जानीते हि ब्रह्मवित् परात्मैव नः सुहृदिति। स तमुपश्लोक्य नित्यं नन्दति प्रीणाति खलु गृणन् तस्य गुणान्। तत्कथाप्रसङ्गश्च तमेव सदा सुखरयति। स यथा तच्चित्तस्तत्तत्त्वविवेकेन मोदते न केनाप्यन्येन तथा। ज्ञातं हि तेन परात्मैव नः पिता पूज्यश्च तदाकूतमेव सर्वथा प्रमाणं नान्यदिति। अतः स सर्व्वात्मना नित्यमेव यतते तन्निरूपयितुं। येन खलु वाक्येन प्रपञ्चितामधिगतेन तत्-स्वरूपं तदाकूतञ्च परामृश्यते तदेव स जल्पति मुहुः शीलयति सर्व्वेषां श्रेयसे च नित्यं विवृणोति। स हि तत्कीर्त्तनं च परिहाय न किमपि रटति। अहो तस्मिन्नेव तस्य काप्यहेतुकी भक्तिस्तत्-कथासु प्रमोदश्च। अतः साध्विदमुक्तं 'आत्मनि स क्रीड़ति आत्मन्येव रमते च'। किञ्च स एव किल ब्रह्मविदां वरिष्ठः यो हि केवलं परात्मानं प्रीणयन् प्रमाणयंश्च तदाकूतं निश्चेष्ट इव

नास्ते अपि तु तदाशंसितं शिरसि निधाय श्रेयसे समारम्भाय च नित्यं यतते। किं बहुना विशेषोपसत्त्या पुनः प्रीतिः कर्म्मतन्तूनां च सर्व्वेषां खलु वैशिष्ट्यं। तथैव मानुषं जन्म फलवच्चेति॥ ६॥

४६

**बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति। दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्॥ ७॥**

'बृहत् च' महत् सर्व्वव्यापित्वात् 'तत्' प्रकृतं ब्रह्म 'दिव्यं' स्वयम्प्रभं 'अचिन्त्यरूपं' सर्व्वेन्द्रियाणामगोचरत्वात् 'सूक्ष्मात् च' मनसोपि 'तत् सूक्ष्मतरं विभाति'। किञ्च 'दूरात् सुदूरे' वर्त्तते अविदुषामत्यन्तागम्यत्वात् 'तत्' ब्रह्म 'इह' 'अन्तिके च' समीपे च 'पश्यत्सु' चेतनावत्सु 'इह एव' 'निहितं' स्थितं 'गुहायां' आत्मनि॥ ७॥

ब्रह्मैव बृहत् महच्च। अनीदृशस्वभावत्वात् नान्यत् किमपि तत्तद्धर्म्मैः सम्बध्यते। तत् खलु स्वेनैव ज्योतिषा सर्व्वत्र प्रकाशते। तस्य स्वरूपमप्यवाङ्मनसगोचरं सूक्ष्मादपि सूक्ष्मञ्च। तत् खलु दविष्ठात् नक्षत्रादपि दूरे सर्व्वेषामन्तिके हृदेशेऽपि चास्माकं तिष्ठति। सर्व्वव्यवहारसाक्षिस्वरूपेण तच्च सर्वत्रैव चकास्ति॥७॥

४७

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्द्देवैस्तपसा कर्म्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥ ८॥**

'न चक्षुषा गृह्यते' केनचिदपि अरूपत्वात् 'न अपि' 'गृह्यते' 'वाचा' अनभिधेयत्वात् 'न अन्यैः देवैः' इतरेन्द्रियैः न 'तपसा' गृह्यते 'कर्म्मणा वा' न गृह्यते । किं पुनस्तस्य ग्रहणसाधनमित्याह 'ज्ञानप्रसादेन' ज्ञानस्य प्रसादः तेन 'विशुद्धसत्त्वः' विशुद्धान्तःकरणः योग्योब्रह्म द्रष्टुं यस्मात् 'ततः तु' तस्मात् 'तम्' ईश्वरं 'निष्कलं' सर्व्वावयववर्ज्जितं 'पश्यते' उपलभते 'ध्यायमानः' चिन्तयन् । ब्रह्मावबोधनसमर्थमपि स्वभावेन सर्व्वमनुष्याणां ज्ञानं बाह्यविषयरागादिदोषकलुषितम् अप्रसन्नम् अशुद्धं सत् नाववोधयति ॥ ८ ॥

यदा हि धर्म्मज्ञानयोः समुच्चयसिद्ध्या चित्तशुद्धिरुपजायते तदैव खलु ब्रह्मणोऽपारोक्ष्यमात्मनि स्वयमेव प्रकाशते । नत्वीज्यया अनशनेन पञ्चाग्निरूपेण तपसा वा तत् समुपलभ्यं । एतानि खलु न तत्प्राप्तिसाधनानि। तदवभासते ज्ञानप्रसादेनैव सर्व्वेषामात्मनि ॥ ८ ॥

---

## सप्तमोऽध्यायः ।

४८

तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्। पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यं ॥ १ ॥

'तम्' 'ईश्वराणां' प्रभूनां 'परमं महेश्वरं' 'तं' 'देवतानां' द्योतनात्मकानां 'परमं च दैवतं' 'पतिं' 'पतीनां' प्रजापतीनां 'परमं' 'परस्तात्'

परतः 'विदाम' 'देवं' द्योतनात्मकं परमेश्वरं 'भुवनेशं' भुवनानामीशं 'ईड्यं' स्तुत्यं ॥ १ ॥

ईश्वरस्तावत् विश्वेषामधिपतिः सर्व्वेषामीशिता राज्ञां राजा च। वाचामगोचरं तस्यैश्वर्य्यं। इह हि यावन्ति गोहिरण्यादीनि समुपलभ्यन्ते तानि तस्यैव। ये हि पुनस्तत्तदुपकरणानां विभुत्वेन वर्त्तन्ते तेषां सएव प्रभुः। येच खलु स्फीतानां राष्ट्राणां प्रवर्त्तकाः सएव तेषां प्रभवति। किं वहुना ज्ञानैश्वर्य्यादिभिर्मनुष्यादप्युत्कर्षभाजां दिव्यलोकनिवासिनां देवानामपि सएव देवता पूज्यश्च। स हि प्रजापतीनां पतिः श्रेष्ठादपि श्रेष्ठश्च। न कोऽपि तमतीत्य तिष्ठति। सएव सर्व्वेषामीड्यः सभाजनीयश्च ॥ १ ॥

४८

**न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रिया च ॥ २ ॥**

'न तस्य' 'कार्य्यं' शरीरं 'करणञ्च' चक्षुरादि 'विद्यते' 'न' 'तत्समः' तेन समः 'च' न ततः 'अभ्यधिकः' 'च' 'दृश्यते'। 'परा अस्य शक्तिः' 'विविधा' विचित्रा 'एव श्रूयते' अस्य ज्ञानक्रिया वलक्रिया च 'ज्ञानवलक्रिया च' 'स्वाभाविकी ॥ २ ॥

शरीरं तावदुपायपरिपाटीघटितं किमपि यन्त्रं अतएव कार्य्यं। ईश्वरस्य तु तन्नास्ति। न स पुनर्देहोपाधिकेन यन्त्रेण नियम्यते नापि च कस्यचित् कार्य्यं। इदं तावत् विकारजातं तस्यैव कार्य्यं स हि तत्कारणानां कारणं च। असत्यपि

देहसङ्घाते स खलु सर्व्वं पश्यति सर्व्वञ्च विजानाति। स हि परः सर्व्वस्मात्। न कोऽपि तत्प्रतिबलोऽस्ति। न हि कोऽपि तस्मादतिरिच्यते च। सएव सर्व्वेषां स्रष्टा सर्व्वञ्च खल्विदं तेनैव सृष्टं। स किल विश्वचक्रस्य महाबलो राजा अन्ये च तत्प्रजा-तन्तुप्रायाः। सोऽस्माकं पिता वयन्तु तत्सन्ततयः। स किल नः प्रभुः वयन्तु तद्विधिकरा भृत्याः। सर्व्वं हि तद्विधाना-देवोत्पद्यन्ते लीयन्ते च। इह हि भूतभौतिकान्यात्मानमधिकृत्य लब्धवर्णैर्यद्यत् तत्त्वशास्त्रं प्रवर्त्तितं तत्तदेव तस्याचिन्तनीयं लोकोत्तरञ्च सामर्थ्यमुररीकुरुते।

किञ्च यथा हि वयं चक्षुरादिभिर्विषयीकृत्य किमपि तर्का-वष्टम्भेन विचारयाम प्रख्यापयाम च देहव्यपाश्रितैः स्नायुप्रचयैः किमपि वीर्य्यं स खलु तथा शक्तिप्रख्यापनार्थं वस्त्ववगमार्थं च देहेन्द्रियव्यापारं नापेक्षते। सहि स्वप्रभावेण सर्व्वं विजानाति सङ्कल्पमात्रेण शुभानि सूते च। न तस्य ज्ञानं इन्द्रियव्यपेक्षं नापि च तद्बलं वस्तुतन्त्रं। तदुभयं तस्य स्वाभाविकमेव। यस्मात् च विज्ञानप्रबुद्धाः प्राणिनः समुत्पद्यन्ते अहो किमिदं महदाश्चर्य्यस्थानं तस्य ज्ञानं। यस्माच्च वयं शक्तिमन्तः काप्यहो महीयसी तस्य शक्तिः॥ २॥

५०

न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः॥ ३॥

'न तस्य कश्चित् पतिः अस्ति लोके' अतएव 'नच' तस्य 'ईशिता' नियन्ता 'न एव च तस्य लिङ्गं' यद्दृश्यते। 'सः' सर्व्वस्य 'कारणं' 'करणाधिपाधिपः' करणानामधिपोमनः तस्याधिपः परमेश्वरः 'न च अस्य कश्चित्' 'जनिता' जनयिता 'न च अधिपः' ॥ ३ ॥

ब्रह्म खलु नित्यं निष्कलं स्वतन्त्रञ्च। न किमपि तस्मात् पूर्व्वकारणं विद्यते। न केनापि तत् नियम्यते च ॥ ३ ॥

५१

एषदेवोविश्वकर्म्मा महात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा मनसाभिकॢप्तोय एतद्विदुरमृतास्ते भवन्ति ॥ ४ ॥

'एषः' 'देवः' द्योतनात्मकः परमेश्वरः। विश्वं जगत् क्रियतेऽनेनेति 'विश्वकर्म्मा' महांश्चासौ आत्मेति 'महात्मा' सदा सर्व्वदा 'जनानां हृदये' 'संनिविष्टः' सम्यक् स्थितः। 'हृदा' हृत्स्थया 'मनीषा' मनसः सङ्कल्पादिरूपस्य ईष्टे नियन्तृत्वेनेति मनीट् तया विकल्पवर्ज्जितया 'मनसा' मननरूपेण सम्यग्दर्शनेन 'अभिकॢप्तः' ज्ञातुं शक्यतइत्येतत्। 'ये' 'एतत्' ब्रह्म 'विदुः' जानन्ति 'अमृताः' अमरणधर्म्माणः 'ते भवन्ति' ॥ ४ ॥

ईश्वरस्तावत् विश्वकार्य्यस्य कारणतया विश्वकर्म्मेत्युच्यते। नासौ विज्ञानात्मेव परिच्छिन्नोऽपितु भूमस्वभावः। स हि सर्व्वेषां हृदि प्राणानां प्राणरूपेण नित्यं तिष्ठति। निर्विचिकित्सितेन ज्ञानेनासौ प्रकाश्यते। ये खलु विमृश्य तं विजानन्ति तएव तत्सङ्गजनितं भूमानन्दं लभन्ते ॥ ४ ॥

५२

**तन्दुर्द्दर्शं गूढ़मनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरोहर्षशोकौ जहाति ॥५॥**

'तं' 'दुर्द्दर्शं' दुःखेनायासेन दर्शनमस्येति दुर्द्दर्शः अतिसूक्ष्मत्वात् तं 'गूढ़ं' गहनं 'अनुप्रविष्टं' विषयविकारैः प्रच्छन्नमित्येतत् 'गुहाहितं' गुहायां आत्मन्याहितं स्थितम्। गह्वरे स्थाने विषमे अनेकानर्थसङ्कटे तिष्ठतीति 'गह्वरेष्ठं' 'पुराणं' पुरातनम्। 'अध्यात्मयोगाधिगमेन' विषयेभ्यः प्रतिसंहृत्य आत्मनः परमात्मनि समाधानम् अध्यात्मयोगः तस्य अधिगमस्तेन 'मत्वा' 'देवं' द्योतनात्मकं 'धीरः हर्षशोकौ जहाति' ॥ ५ ॥

ब्रह्म हि दुर्ज्ञेयं। बलीयसा विषयस्नेहेन भ्रष्टविवेकस्तन्न ज्ञातुं प्रभवति। स्वधीतेन दर्शनेन सुगृहीतया च आन्वीक्षिक्या न तस्य संशया निवर्त्तन्ते नापि च तज्ज्ञानं प्रसादमधिरोहति। स खलु प्रत्येति सत्यस्य सत्यं तत् तम इव किमप्यवस्थिति। किञ्च अरणीष्वग्निरिव ब्रह्म सर्व्वेषु भूतेषु गूढ़मनुप्रविश्य वर्त्तते। तत् खलु विशुद्धसत्त्वानां तदायत्तचित्तानां च विज्ञानात्मनि अलातप्रभवो भास्वरः पावक इव स्वेन ज्योतिषा अवभासते। तेनैवायमाकाशः सर्व्वतो व्याप्तः। तत् खल्वात्मनोऽन्तरात्मा। तदेव नित्यं हि वर्त्ततेऽस्माकमन्तर्वहिश्च। तदेव तुषारस्तोमधवले हिमवति ज्वालाकराले दवाग्नौ नक्रकुम्भीरसङ्कुले तरङ्गोद्गारमुखरिते समुद्रे अनेकानर्थसङ्कटे दुष्प्रचारे प्रदेशे च तिष्ठति। तच्च नः पुराणः पिता पितामहश्च। धीराः खल्वध्यात्मयोगेन दुर्ज्ञेयमपि तत् ज्ञात्वा हर्षशोकाभ्यां प्रमुच्यन्ते। अध्यात्मयोगो नाम परमात्मन्यात्मनः समाधानं।

यदा वयं तज्जनितेन प्रह्वीभावेण तदिच्छासाम्यं भजामहे सत्यं शिवं सुन्दरं च तत्स्वरूपमपरोचीकृत्य सुभगमानिनामस्माकं जिज्ञासा च निवर्त्तते तदैव सर्व्वथा लब्धनिर्व्वाणं हृदयमिदं तस्मै प्रीतिदायमुपाहृत्य तदालोकप्रवर्त्तिना महतानन्देन नरीनृत्यते जहाति च विषयविकारजौ हर्षशोकौ। किं बहुना वयं ज्ञानेन प्रीत्या आकूतेन च यावत् तत्साधर्म्म्यमुपलभामहे तावतैवा-स्माकं तत्सम्बन्धो गाढ़ं वरीवर्त्ति। अपि च वयं पावनं तत्सान्निध्यं समुपलभ्य पूता भवामः। अहो वयं अनेनैव योगेन तद्विजानीम तदादिष्टं च धर्म्ममनुष्ठातुं शक्नुम। अनेनैव नः स्वर्गोऽनेनैव च नः मुक्तिः ॥ ५ ॥

५३

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मन-सोये मनोविदुः। ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ ६ ॥**

'प्राणस्य प्राणम्' 'उत' तथा 'चक्षुषः चक्षुः उत श्रोत्रस्य श्रोत्रं' 'मनसः' 'मनः' 'ये' 'विदुः' जानन्ति 'ते' 'निचिक्युः' निश्चयेन ज्ञातवन्तः 'ब्रह्म' 'पुराणं' चिरन्तनम् 'अग्र्यं' श्रेष्ठम् ॥ ६ ॥

यः खलु मन्यते ब्रह्म सर्व्वेषां चित्प्रकाशकारणं निधानं चेति तस्यैव ज्ञानं विचिकित्साशून्यं वर्त्तते ॥ ६ ॥

५४

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्।**
**विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥७॥**

'एकधा एव' एकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेण आकाशवन्निरन्तरेण 'अनुद्रष्टव्यम्' 'एतत्' ब्रह्म । अन्येन हि अन्यत् प्रमीयते इदन्तु 'अप्रमेयं' 'ध्रुवं' नित्यं कूटस्थम् । 'विरजः' विगतरजः अधर्म्मादिमलरहितं 'परः' सूक्ष्मः 'आकाशात्' अपि । 'अजः' न जायते 'आत्मा' 'महान्' महत्तरः सर्व्वस्मात् 'ध्रुवः' अविनाशी ॥ ७ ॥

ईश्वरस्तावत् केवलोऽप्रतिमश्च । न स केनाप्युपमीयते । सहि व्यतिरिक्तः सर्व्वस्मात् परश्च आकाशात् । अपि त्वाकाशे तिष्ठन् सर्व्वं कार्य्यकारणजातं नियमयति ॥ ७ ॥

५५

**यस्मादर्व्वाक् संवत्सरोऽहोभिः परिवर्त्तते ।**
**तद्देवाज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ ८ ॥**

'यस्मात्' ईशानात् 'अर्व्वाक् संवत्सरः' संवत्सरावच्छिन्नः कालः 'अहोभिः' सावयवैरहोरात्रैः 'परिवर्त्तते' । 'तत्' 'ज्योतिषां ज्योतिः' 'आयुः' 'अमृतं' ब्रह्म 'देवाः' 'हि आ उपासते' ॥ ८ ॥

अन्यस्मिन् लोके ज्ञानभक्तिप्राकर्ष्येन सुकृतसम्पदा चास्मादप्युत्कर्षभाजो ये खलु जीवाः सन्ति ते हि नित्यं तं देवमुपासते । इह हि वयमपि तत्सभाजनायां तद्देव सम्भाविताधिकारा जाताः । अहो भाग्यमहोभाग्यं । महती चेयमस्माकं गौरवभूमिः ॥ ८ ॥

५६

**सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः । सन साधुना कर्म्मणा भूयान् नो एव असाधुना कणीयान् ॥९॥**

'सर्व्वस्य वशी' सर्व्वमस्य वशे वर्त्तते 'सर्व्वस्य ईशानः' 'सर्व्वस्य अधिपतिः' 'सः' पुरुषोविज्ञानमयः 'न साधुना कर्म्मणा' 'भूयान्' भवति वर्द्धते 'नो एव असाधुना' कर्म्मणा 'कणीयान्' अल्पतरोभवति। सर्व्वसंसारधर्म्मवर्जितः सः पुरुषः पूर्व्वावस्थातोन हीयते न च वर्द्धतइत्यर्थः ॥ ९॥

यः खलु नियन्ता येनैव नियमतन्त्रेण सन्नद्धो न स तावत् कदापि तदतिवर्त्तितुं क्षमते। सर्व्वाधिपतिरीश्वरएव सर्व्वान् नियमयति। वयं हि यथा सदसद्रूपैः कर्म्मभिर्विचित्रमवस्थापरिणामं भजामहे न केनापि कारणेन तादृशः कश्चिदपि परिणामविशेषस्तस्मिन् सम्भवति। अनाधेयातिशयं हि तत्स्वरूपं नित्यमविकार्य्यञ्च ॥ ९ ॥

५७

**एषसर्व्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधरणएषां लोकानामसम्भेदाय ॥ १० ॥**

'एषः सर्व्वेश्वरः' 'एष' 'भूताधिपतिः' भूतानामधिपतिः 'एषः भूतपालः' भूतानां पालयिता रक्षिता 'एषः सेतुः' 'विधरणः' सर्व्वसंसारधर्म्मव्यवस्थाया विधारयिता 'एषां लोकानां' भूरादिलोकानाम् 'असम्भेदाय' असम्भिन्नमर्य्यादायै। लोकाः सर्व्वे सम्भिन्नमर्य्यादाः स्युरतोलोकानामसम्भेदाय सेतुभूतोऽयं परमेश्वरः ॥ १० ॥

स खलु भूतपालोऽपरिवर्त्तिसद्भैर्दुष्प्रकम्पैरार्य्यैर्नियमैर्विश्वचक्रं प्रवर्त्तयति तेषामव्यस्ततया न कदापि सर्व्वविलोपः प्रसज्येत। स हि सर्व्वेषां लोकानां मर्य्यादाऽविभेदाय स्वयमेव सेतुभूतस्तान् धारयति ॥ १० ॥

५८

अस्मिन् द्यौः पृथिवी चान्तरीक्षमोतं मनः सह प्राणैश्च सर्व्वैः। तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथ अमृतस्यैषसेतुः ॥ ११ ॥

'अस्मिन्' अक्षरे पुरुषे 'द्यौः पृथिवी च अन्तरीक्षम्' 'ओतं' समर्पितं 'मनः सह' 'प्राणैः' करणैः 'च' 'सर्व्वैः'। 'तम् एव' सर्व्वाश्रयम् 'एकम्' अद्वितीयं 'जानथ' जानीत 'आत्मानम्' अजम् एकं ब्रह्म 'अन्याः वाचः' 'विमुञ्चथ' विमुञ्चत परित्यजत। यतः 'अमृतस्य' अमृतत्वस्य मोक्षप्राप्तये 'एषः सेतुः' संसारमहोदधेरुत्तरणहेतुत्वात् ॥ ११ ॥

ईश्वरस्तावत् सर्व्वेषां पालकः शरण्यश्च। तमेव जानीयात् अन्या वाचः परित्यजेत्। तत्परामर्शमन्तरेण किमपि न ब्रूयात् न च विचिन्तयेत् नापि च कुर्य्यात्। सर्व्वथा तस्यैव शरणमन्विच्छेत्। मर्त्त्यः खल्वनेन धर्म्मसमयेन पापादुपतापात् मोहाच्च विप्रमुक्तोऽमरणधर्म्मत्वं समधिगच्छति। ईश्वरो हि विमुक्तेरपावृतं द्वारं ॥ ११ ॥

५९

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ॥ १२ ॥

एषः परमात्मा 'न जायते' नोत्पद्यते 'म्रियते वा' न म्रियते 'विपश्चित्' मेधावी सर्व्वज्ञः अपरिलुप्तचैतन्यस्वभावत्वात् किञ्च 'न' 'अयम्' आत्मा 'कुतश्चित्' कारणान्तरात् बभूव 'न' अपि एषआत्मा 'बभूव कश्चित्' अर्थान्तरभूतः ॥ १२ ॥

भगवतस्तावत् जन्मादिभावविकारो नास्ति। नित्यज्ञान-स्वरूपत्वात् नापि च भ्रममोहौ सम्भवतः। स खलु शुद्धोऽपाप-विद्धश्च। तस्मादेव सर्व्वे समुत्पन्नाः। अविक्रियत्वात् न स पुनः केनचिदर्थान्तरस्वरूपेण विपरिणमते च। यथा हि दुग्धस्य परिणामो दधि मृत्तिकाया घटः सुवर्णस्य वा कुण्डलं न स तथा कस्यापि विकारः परिणामो वा। प्रत्यक्षमिदं तावत् रज्जौ भुजङ्गइव मरीचिकायां जलमिव शुक्तिकायां च रजतमिव न तस्मिन् भ्रान्तिकल्पितमवभासते। तेनैवेदं समुत्पादितं। सर्व्वयोनिस्तस्मात् कार्य्यभूतं तच्च व्यतिरिक्तं। स्वरूपमपाकृत्य न स खलु जाड्यस्वभावेन जीवरूपेण वा परिणमते। स खल्व-स्माकमीड्यः सेव्यश्च। वयन्तु तदुपासकास्तत्सेवकाश्च ॥ १२ ॥

६०

**यदर्च्चिमद्यदणुभ्योऽणु यस्मिन् लोकानिहितालोकि-नश्च। तदेतत् सत्यं तदमृतं तत् वेद्धव्यं सौम्य विद्धि ॥ १३ ॥**

'यत्' ब्रह्म 'अर्च्चिमत्' दीप्तिमत् 'यत् अणुभ्यः अणु' 'यस्मिन्' 'लोकाः' भूरादयः 'निहिताः' स्थिताः 'लोकिनः च' लोकनिवासिनो-मनुष्यादयः। 'तत् एतत्' सर्व्वाश्रयं 'सत्य' 'तत्' 'अमृतम्' अविनाशी 'तत् वेद्धव्य' मनसा ताड़यितव्यं तस्मिन् मनःसमाधानं कर्त्तव्यमित्यर्थः। यस्मादेवं तस्मात् हे 'सौम्य' 'विद्धि' ब्रह्मणि मनः समाधत्स्व ॥ १३ ॥

सौम्य मा याहि सर्व्वान्तरतमात् परमात्मनो दूरं। तद्विरहगुरुव्यथया च मुह्यमानः कार्पण्येन मा शुच। अपि तु धूतपापः सर्व्वात्मना तत्पादमूलमन्विच्छ एकाग्रमनसा

तस्मिन्नेवात्मानं समाधत्स्व समाधियोगजनितेन च परानन्द-सन्दोहेन नितरां मोदस्व ॥ १३ ॥

६१

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवत् ॥ १४ ॥

'प्रणवः' ओङ्कारः 'धनुः' 'शरः हि' 'आत्मा' जीवात्मा 'ब्रह्म तल्लक्ष्यम् उच्यते' । 'अप्रमत्तेन' प्रमादवर्ज्जितेन जितेन्द्रियेण एकाग्रचित्तेन तल्लक्ष्यं ब्रह्म 'वेद्धव्यं' ततस्तद्वेधनादूर्द्ध्वं 'शरवत् तन्मयः भवेत्' यथा शरो-लक्ष्यमयो भवति तथा तस्य साधकस्य आत्मा ब्रह्ममयो भवेत् ॥ १४ ॥

ओङ्कार एव प्रणवः । जन्मस्थितिभङ्गकारणं हि तद्वाच्यार्थः । स च ब्रह्मणो वाचकः शब्दः । ओङ्कारजीवात्मनोर्धनुःशररूप-कल्पनयैतदेव उपलभ्यते यथा हि शरव्यं शरेण वेद्धुकामः कश्चित् धनुरवलम्बते तथैव लक्ष्ये ब्रह्मणि जीवात्मानं सन्निधाप-यितुमीहमानस्य तत्वाचकः शब्दोऽवलम्बनाय भवतीति । यस्य खल्वात्मा वेद्धव्यं ब्रह्म विद्धा तदेवानुप्राविशत् तेनैव ज्ञातं यथायं मे आत्मा ब्रह्मण्यनुप्रविष्टो वर्त्तते तथेदं कार्य्यकारण-सङ्घातं तद्वेवेति ॥ १४ ॥

६२

समे शुचौ शर्क्करावह्निवालुका-
विवर्ज्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीड़ने
गुहानिवाताश्रयणे प्रयोजयेत् ॥ १५ ॥

'समे' निम्नोन्नतरहिते देशे'शुचौ' शुद्धे,'शर्करावह्निवालुकाविवर्जिते' शर्कराः क्षुद्रोपलाः वह्निवालुकाः तप्तवालुकाः ताभ्योविवर्ज्जिते 'शब्द-जलाश्रयादिभिः' विहङ्गादीनां शब्दः जलं आश्रयोमण्डपम् इत्यादिभिः 'मनोऽनुकूले' मनोरमे स्थाने 'न तु' 'चक्षुपीड़ने' चक्षुःपीड़ने प्रतिवाद्य-नभिमुखे 'गुहानिवाताश्रयणे' गुहायामेकान्ते निवाते प्रचण्डवायुवर्ज्जिते आश्रयणे आश्रये 'प्रयोजयेत्' प्रयुञ्जीत चित्तं परमे ब्रह्मणि ॥ १५ ॥

यत्र किल निराविलं चित्तं निरञ्जने ब्रह्मणि सुखं समाधातुं शक्यते तत्रैव निषण्णः पर्य्युपासीत। प्रखरसौरकरकलितं पूतिगन्धोपहतं कर्परमलमल्लकाकीर्णञ्च स्थानं न मनस उपशान्तये नापि च ब्रह्मसमाधानायोपकल्पते। यत् खलु कदलीषण्ड-मण्डितं तालतमालोपशोभितं विरलजनप्रचारमवन्धुरं विशोधितं सुच्छायञ्च यत्र वापीकूपतड़ागादीनां स्निग्धं प्रसन्नं च सलिलं सदैव सुलभं यत्र खलु मृदुमन्दं वाति कुसुमगन्धामोदो जलसीकरासारशीतलोवायुः वमति किल कर्णेषु कलकण्ठानां विहगानां रुतं कामप्यनिर्वाच्यां मधुधारां च नापि च विद्यते यत्र चक्षुषोरुद्वेगकरं किमपि प्रतीपं वस्तु तदेव प्रशस्ततर-मुपास्तिकर्म्मणि सम्मतञ्च तत् ब्रह्मविदां। उत्कलिकाकुलं चित्तं न केनापि प्रयत्नविशेषेण ब्रह्मणि समाधातुं शक्यते। अतो यत् किलं सर्व्वात्मना सुखोन्मेषकरं यत्र च किमपि विक्षेप-निमित्तं नास्ति तत्रैव निषण्णः समुपासीत ॥ १५ ॥

६३

त्रिरुन्नतꣳ स्थाप्य समꣳ शरीरꣳ हृदीन्द्रियाणि मनसा

सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांऽसि सर्व्वाणि भयावहानि ॥ १६ ॥

त्रीणि उरोग्रीवाशिरांसि उन्नतानि यस्मिन् शरीरे तत् 'त्रिरुन्नतं' 'शरीरं' 'समं' 'स्थाप्य' संस्थाप्य 'हृदि' 'इन्द्रियाणि' चक्षुरादीनि 'मनसा' 'संनिवेश्य' संनियम्य 'ब्रह्मोडुपेण' ब्रह्मैव उडुपं तरणसाधनं तेन 'प्रतरेत' अतिक्रमेत् 'विद्वान्' 'स्रोतांसि सर्व्वाणि' संसारसागरस्य 'भयावहानि' ॥१६॥

पूर्व्वस्मिन् मन्त्रवर्णे उपासाकर्म्मानुकूलं स्थानं प्रपञ्चितं। अस्मिंस्तु तत्कालसमुचितमासनं विशिनष्टि। युञ्जानेन तावत् उरोग्रीवाशिरांस्युच्छ्रितानि कृत्वा ऋज्वायतेन भाव्यं। तेनैव हि देहमनसोरुद्वेगनिमित्ता असंस्था सम्यक् निवर्त्तते। अतः सर्व्वथा उपासायामनेनैवासनविशेषेणोपविश्य मनसा सह चक्षुरादीनि सर्व्वाणीन्द्रियाणि हृदि विधारयेत्। रूपरसादिभ्यो विषयेभ्यः प्रत्याहृतैस्तैः सहात्मानं ब्रह्मणि समादध्यात्। तस्मिंश्च कामप्यनपायिनीं प्रीतिं समर्प्य स्वयमपि कृतकृत्यो भवेत् ॥ १६ ॥

---

## अष्टमोऽध्यायः ।

६४

विश्वतश्चक्षुरुत विश्वतोमुखोविश्वतोवाहुरुत विश्वतस्पात्। संवाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देवएकः ॥ १ ॥

सर्व्वत्र चक्षूंषि विद्यन्ते अस्येति 'विश्वतश्चक्षुः' 'उत' तथा सर्व्वत्र

मुखानि विद्यन्ते अस्येति 'विश्वतोमुखः' सर्व्वत्र बाहवोविद्यन्ते अस्येति 'विश्वतोबाहुः' 'उत' सर्व्वत्र पादा विद्यन्ते अस्येति 'विश्वतस्पात्'। सः परमेश्वरः 'बाहुभ्यां' 'सं धमति' संधमति संयोजयति मनुष्यान् 'पतत्रैः' पतत्रैः संधमति पक्षिणः 'द्यावाभूमी' द्यावापृथिवी 'जनयन्' सृष्टवान् 'देवः एकः' ॥ १ ॥

ईश्वरस्य चक्षुः सर्व्वत्रैव व्यतिभाते। तेन खलु साक्षिरूपेण सवाह्याभ्यन्तरं सर्व्वं तुल्यप्रतिपत्त्या परिज्ञायते। तिमिरावगुण्ठिता रात्रिरपि दलिताञ्जनपुञ्जप्रतिमैस्तमस्तोमैर्न तच्चक्षुर्निगूहितुं क्षमते। सर्व्वत्रैव हि तस्य मुखं विद्यते। पापाः खलु तत् किमपि करालं परिपश्यन्ति सुकृतिनश्च प्रसादविमलं ह्लादकरं च। सर्व्वत्रैव तस्य बाहवः सन्ति। इह हि कार्य्यकारणसङ्घातरूपे जगति तस्यैव दुर्विभाव्यं बलं लोकोत्तरं च नैपुण्यं विद्योतते। परितस्तस्य पादा विद्यन्ते। स हि पूर्णस्वरूपः सर्व्वमवष्टभ्य स्वे महिम्नि राजते योजयति च बाहुभ्यां द्विपदान् पक्षपुटाभ्यां च पक्षिणः। कार्य्यधुरमुद्वोढुं सुखमुद्भर्त्तुं च येन खलु यान्यङ्गानि सम्भार्य्याणि प्रयोजनविज्ञानवता तेन भगवता तस्मै तान्येव प्रदत्तानि। स हि सहायनिर्व्यपेक्षः केवलो भूरादिलोकं ससर्ज्ज ॥ १ ॥

६५

## सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम्।
## सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ २ ॥

सर्व्वतः पाणयः पादाश्च यस्य 'तत्' 'सर्व्वतः पाणिपादं' सर्व्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत् 'सर्व्वतोऽक्षिशिरोमुखं' 'सर्व्वतः श्रुतिः'

श्रवणमस्येति] 'श्रुतिमत्' 'लोके' प्राणिनिकाये 'सर्व्वमावृत्य' संव्याप्य 'तिष्ठति' ॥ २ ॥

हे नरा यूयं परमात्मानं सर्व्वतः सन्तं विदित्वा श्रेयसे समारम्भाय संयतध्वं पापाच्च विभीत ॥ २ ॥

६६

सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः।
सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः ॥३॥

सर्व्वाणि आननानि शिरांसि ग्रीवाश्चास्येति 'सर्व्वाननशिरोग्रीवः' सर्व्वेषां भूतानां गुहायां हृदये शेते इति 'सर्व्वभूतगुहाशयः' 'सर्व्वव्यापी' च 'सः' 'भगवान' ईश्वरः यस्मादेवं 'तस्मात् सर्व्वगतः' 'शिवः' मङ्गलः ॥३॥

स खलु सर्व्वगतः सर्व्वसाक्षी परमेश्वरः सर्व्वेषां हृद्देशे नित्यमेव तिष्ठति। जीवानां शुभंयुना तेनेदमनेककर्त्तृ भोक्तृ-स्वरूपं विश्वं समुत्पादितं। यः खलु सुभगो यदेव किञ्चित् शुभं लभते तन्नूनं शुभावहात् तस्मादेव। स ह्यस्माकं ज्ञानदः सुखदो मुक्तिदः श्रेयसां निदानं च ॥ ३ ॥

६७

अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्य-कर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ४ ॥

'अपाणिपादः' 'जवनः' दूरगामी 'गृहीता' यदुपादेयं तस्य।

'पश्यति' सर्व्वम् 'अचक्षुः' अपि सन् 'सः शृणोति अकर्णः' अपि। 'सः वेत्ति वेद्यम्' अमनस्कोऽपि सर्व्वज्ञत्वात् 'न च तस्य अस्ति वेत्ता' 'तम् आहुः' 'अग्र्यं' प्रथमं सर्व्वकारणत्वात् 'पुरुषं' पूर्णं 'महान्तम्' ॥ ४ ॥

परिच्छिन्नस्य जीवस्येव न खलु भूमस्वभावस्य विभोः कर-चरणाद्यवयवाः सन्ति। तत्तदिन्द्रियव्यापाराधीनं तु कार्य्य-जातं तस्य पारमैश्वर्य्येण स्वयमेव निष्पद्यते ॥ ४ ॥

६८

यएषसुप्तेषु जागर्त्ति कामं कामं पुरुषोनिर्म्मिमाणः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिंल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन ॥ ५ ॥

'यः एषः' पुरुषः 'सुप्तेषु' प्राणिषु 'जागर्त्ति' न स्वपिति किन्तु 'कामं कामं' तत्तमभिप्रेतं अन्नपानाद्यर्थं 'निर्म्मिमाणः' निष्पादयन्। 'तत् एव' 'शुक्रं' शुभ्रं शुद्धं 'तत् ब्रह्म' नान्यत् गुह्यं ब्रह्मास्ति 'तत् एव' 'अमृतम्' अविनाशि 'उच्यते' किञ्च पृथिव्यादयः 'सर्व्वे' 'लोकाः' 'तस्मिन्' ब्रह्मणि 'श्रिताः' आश्रिताः सर्व्वलोककारणत्वात् तस्य। 'तत्' ब्रह्म 'उ' 'न' 'अत्येति' अतिवर्त्तते 'कश्चन' कश्चिदपि ॥ ५ ॥

वयं जाग्रद्विषयमनुभवामोत सौषुप्तिकं तमो वा प्रविशाम स खल्वस्माकं सर्व्वेष्वप्यवस्थापरिणामेषु सदैव जागरवान् उच्चावचान् कामान् निर्म्मिमीते। आत्मनः श्रेयोविधातुं सर्व्वथा निर्व्यापारेष्वप्यस्मासु स पुनर्व्यापारवान् नित्यप्रवृत्तान्य-स्माकं हितानि सन्धत्ते च ॥ ५ ॥

६९

अणोरणीयान् महतोमहीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥ ६ ॥

'अणोः' सूक्ष्मादपि 'अणीयान्' अणुतरः 'महतः' 'महीयान्' महत्तरः । स च 'आत्मा' परमेश्वरः 'अस्य जन्तोः' प्राणिजातस्य 'गुहायां' हृदये 'निहितः' स्थितः । 'तम्' 'ईशम्' 'अक्रतुं' विषयभोगसङ्कल्परहितम् अस्य च 'महिमानं' 'पश्यति' यः सः 'वीतशोकः' 'धातुः' ईश्वरस्य 'प्रसादात्' । प्रसन्ने हि परमेश्वरे तद्याथात्म्यज्ञानमुपपद्यते ॥ ६ ॥

ईश्वरस्तावदस्माकं सूक्ष्मादात्मनोऽपि सूक्ष्मतरामहत आकाशादपि महत्तरश्च । तत्प्रतिपित्सया न केनापि क्लेशबहुलः प्रव्रज्यादिकः स्वीकार्य्यः । स खलु सर्व्वेषां हृदयकन्दरे आत्मनि च नित्यमेवावतिष्ठते । यस्तमभोगकामं नित्यतृप्तमानन्दघनं विज्ञानप्रकाशेनापरोक्षीकरोति न स तावत् शुचामधिरोहभूमिः । यः खलु तत्प्रेमपीयूषनिर्य्यूहैर्मोदते न स पुनः केनाप्यभावप्रत्ययेन दंदह्यते च ॥ ६ ॥

७०

एकोवशी सर्व्वभूतान्तरात्मा
एकꣳ रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषाꣳ सुखꣳ शाश्वतं नेतरेषाम् ॥ ७ ॥

सहि परमेश्वरः सर्व्वगतः स्वतन्त्रः 'एकः' 'वशी' सर्व्वं ह्यस्य जगत् वशे वर्त्तते 'सर्व्वभूतान्तरात्मा' सर्व्वेषां भूतानामन्तरात्मा 'एकं रूपं' 'बहुधा' बहुप्रकारं 'यः करोति' स्वात्मसत्तामात्रेण अचिन्त्यशक्तित्वात् । 'तम्' 'आत्मस्थं' स्वकीये आत्मनि स्थितं 'ये' 'धीराः' विवेकिनः 'अनुपश्यन्ति' साक्षादनुभवन्ति 'तेषां' 'शाश्वतं' नित्यं 'सुखम्' आनन्दलक्षणं भवति 'न इतरेषाम्' अनेवंविधानाम् ॥ ७॥

सर्व्वं ह्यस्य वशे तिष्ठति । स खलु सर्व्वेषां नियामकोऽन्तरात्मा च । साक्षिरूयनिर्व्यपेक्षेण केवलेन तेनैवेदमनेककर्त्तृभोक्तृस्वरूपं विश्वं ससृजे। अचिन्त्यशक्तिकत्वात् स्वरूपमनपाकृत्य तदेवैकमपि बहुधा तेनैव व्याकृतं। अविक्रियत्वात् च न केनाप्यर्थान्तरस्वरूपेण परिणामितं च। यस्तं सर्व्वान्तरं पुरुषमात्मस्थमनुपश्यति स यथा विषयागोचरं शाश्वतं सुखं भुंक्ते न तथा अनीदृशस्वभावो विषयी ॥ ७ ॥

७१

नित्योऽनित्यानां चेतनश्चेतनानामेकोबहूनां योविदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषाꣳ शान्तिः शाश्वती नेतरेषाम् ॥ ८ ॥

'नित्यः अनित्यानां' 'चेतनः' 'चेतनानां' 'चेतयिता सर्व्वजन्तूनाम् । किञ्च सर्व्वेश्वरः सर्व्वज्ञः 'एकः सन्' 'बहूनां' कामिनां संसारिणां कर्म्मानुरूपं 'कामान्' 'यः' अनायासेन 'विदधाति' ददाति । 'तम्' 'आत्मस्थं' 'ये' 'अनुपश्यन्ति' 'धीराः' 'तेषां शान्तिः' 'शाश्वती' नित्या 'न इतरेषाम्' ॥ ८ ॥

इह हि सर्व्वेषामनित्यानां ईश्वरएव नित्यः । स खलु

जीवव्रातान् चित्प्रकाशेन सम्धमयत्युज्जीवयत्योजोवलविवर्द्धकेनान्नेन विधत्ते च तेषामुच्चावचान् पुष्कलान् कामान्। दूरेऽस्तु तावत् लोकान्तरवार्त्ता अस्यामेव पृथिव्यां कतिविधा जीवाः सन्ति तेषामेकैकस्य वा कति च काम्यविषया इति न केनापि परिच्छेत्तुं शक्यते। प्रयोजनविज्ञानवता तेन भगवता तत् सर्व्वं यथोपयोगं नित्यमेव निर्म्मीयते सर्व्वथा परिज्ञायते च। एकोऽणुप्रमाणः कीटरङ्कोऽप्याजीवैर्न परिहीयते च। ये खलु सुकृतिनस्तमात्मस्थमनुपश्यन्ति तेषां लोकोत्तरा शान्तिः प्रकाममुपचीयते। नित्यमापूर्य्यमाणं तत् शान्तिसरी न कदापि परिशुष्यति च ॥ ८ ॥

७२

**यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।**
**अथ मर्त्त्योऽमृतोभवत्येतावदनुशासनम् ॥ ९ ॥**

'यदा सर्व्वे' 'प्रभिद्यन्ते' भेदमुपयान्ति विनश्यन्ति 'हृदयस्य' मनसः 'इह' जीविते एव 'ग्रन्थयः' ग्रन्थिवद्दृढ़बन्धनरूपाः अज्ञानप्रत्ययाः। 'अथ मर्त्त्यः अमृतः भवति' 'एतावत्' एतावन्मात्रम् 'अनुशासनम्' अनुशिष्टिरुपदेशः ॥ ९ ॥

अज्ञानप्रत्ययास्तावदविमोच्यप्रयोजकत्वात् हृदयस्य ग्रन्थय इत्युच्यन्ते। ताः किल मनसः भ्रान्तिकल्पितसंस्काररूपाः सत्यानृताविवेकरूपाश्च यावत् न भिद्यन्ते तावदेव न कोऽपि तं पावनं पुरुषं समधिगच्छति। यदा पुनस्त्वं दुरुच्छेद्यास्ताः समुच्छेत्तुं प्रभविष्यसि तदैव ज्ञास्यसि येन सुचीर्णेन पथा ब्रह्म

संप्रतिपद्यते स एव मया समासादितः अमरणधर्मत्वञ्चाधिगतमिति । सौम्य एषोऽस्माकमुपदेश एतदनुशासनञ्च ॥ ९ ॥

---

## नवमोऽध्यायः ।

७३

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलꣳ स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ १ ॥**

'द्वा' द्वौ 'सुपर्णा' सुपर्णौ शोभनपतनौ पक्षिणौ 'सयुजा' सयुजौ सहैव सर्व्वदा युक्तौ 'सखाया' सखायौ आत्मानौ क्षेत्रज्ञपरमेश्वरौ 'समानम्' अविशेषम् अधिष्ठानतया एकं 'वृक्षम्' उच्छेदसामान्यात् शरीरं 'परिषस्वजाते' परिष्वक्तवन्तौ । 'तयोः' वृक्षं परिष्वक्तयोः 'अन्यः' एकः क्षेत्रज्ञः 'पिप्पलं' कर्म्मनिष्पन्नं फलं 'स्वादु' यथा भवति तथा 'अत्ति' भक्षयति उपभुंक्ते । 'अनश्नन्' अभुञ्जानः 'अन्यः' इतरः ईश्वरः नित्यशुद्धबुद्धमुक्तस्वभावः सर्व्वज्ञः भोज्यभोक्त्रोः प्रेरयिता 'अभिचाकशीति' पश्यत्येव केवलम् । दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत् ॥१॥

शोभनौ हि द्वौ सुपर्णौ देहनीड़माश्रित्य प्रतिवशतः । तयोरेकः परमेश्वरोऽन्यश्च क्षेत्रज्ञः । चित्घनतनोरीश्वरस्य स्वरूपशोभया क्षेत्रज्ञोऽपि शोभते । स खल्वन्तरतमेन तेन सम्परिष्वक्तः सुखमधिवशति । नाप्याकाशोगुणीभूतस्तयोरन्तरा तिष्ठति । उभावपीमं सङ्घातमनुप्रविश्य सख्येन संपृक्तौ वर्त्तेते । ईश्वरस्तावत् तत्र साक्षिरूपतयावतिष्ठन् क्षेत्रज्ञाय कर्म्मफलं प्रयच्छति । सतु तत् जुषमानः सुखमास्ते च । ईश्वरः खलु

प्रीत्या तं पालयति। सहि कर्म्मक्षेत्रमधिश्रित्य साधुसमारम्भैस्तं प्रीणयितुं यतते च। तयोरेकः स्रष्टा अन्यश्च सृष्टः। एको हि नियन्तृत्वेन वर्त्तते अन्यश्च नियम्यतया। एको हि ददाति अन्यश्च यथासुखं भुङ्क्ते। अहो स खलु सर्व्वेश्वरोऽस्माकं सदैव साहायकव्ययकरो वर्त्तते। वयं तु तत्प्रसादोपात्तं विषयसुखं ब्रह्मानन्दञ्च निर्विशामहि। लब्ध्वाचेमं सङ्घातं तस्यैव प्रेमपीयूषं जुषमानाः सुखं विवर्द्धामहे। अथ दशान्ते समुपागते सम्भाविताधिकाराश्चेत्तर्हि तेनैव सह चिरं विहरिष्यामः ॥ १ ॥

७४

समाने वृक्षे पुरुषोनिमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥ २ ॥

'समाने वृक्षे' एकस्मिन् शरीरे 'पुरुषः' भोक्ता जीवः कामकर्म्मफलरागादिगुरुभाराक्रान्तः 'निमग्नः'। अतः 'अनीशया' पुत्रोमम विनष्टोमृता मे भार्य्या किं मे जीवितेन इत्येवं दीनभावोऽनीशा तया 'शोचति' सन्तप्यते 'मुह्यमानः' अनेकैरनर्थप्रकारैरविवेकतया चिन्तामापद्यमानः। 'जुष्टं' सेवितमनेकैः 'यदा' यस्मिन् काले 'पश्यति' ध्यायमानः 'अन्यम् ईशं' सर्व्वस्य जगतः असंसारिणम् अशनायापिपासाशोकमोहजरामृत्युधर्म्मातीतम् 'अस्य च' परमेश्वरस्य 'महिमानं' विभूतिम् 'इति वीतशोकः' तदा भवति ॥ २ ॥

यदा किल वयमीश्वरं परिहाय विषयसुखं परिपणयितुं

भीमं भवारण्यं प्रविशामस्तदैव तद्दावदाहदग्धहृदया अनुपद-मनुशोचामः । यदा हि प्रीत्या तं सर्व्वेशं स्वे महिम्नि प्रतिष्ठितमवलोक्य भक्त्या तदुद्दिष्टं धर्म्मं प्रसाधयाम तदैव विशोकाः सान्द्रानन्देन विवर्द्धामहे ॥ २ ॥

७५

यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्म-योनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ३ ॥

'यदा यस्मिन् काले 'पश्यः' पश्यति यः स विद्वान् साधकः 'पश्यते' पश्यति 'रुक्मवर्णं' रुक्मस्येव ज्योतिरस्य स्वयंज्योतिःस्वभावं नित्यचैतन्य-रूपं 'कर्त्तारं' सर्व्वस्य जगतः 'ईशं' 'पुरुषं' 'ब्रह्मयोनिं' ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिः तम् । 'तदा' सः 'विद्वान्' 'पुण्यपापे' 'विधूय निरस्य 'निरञ्जनः' निर्लेपः विगतक्लेशः 'परमं' प्रकृष्टं 'साम्यं' समताम् 'उपैति' प्रपद्यते । 'महान्तं' विभुं व्यापिनम् 'आत्मानम्' ईश्वरं 'मत्वा' 'धीरः' धीमान् 'न शोचति' ॥ ३ ॥

यदा खलु कश्चित् विद्वान् धर्म्मनिष्ठः साधकसत्तमो ज्ञान-प्रसादेन छिन्नसंशयस्तमीश्वरं करतलन्यस्तम् आमलकमिव संप्रति-पद्यते तदैव निर्धूतकल्मषो निरभिसन्धानोर्ज्जितं पुण्यं कर्म्म समारभते । विषयसङ्गादुपरतश्च लोकानां हितकाम्यया तस्यैव प्रीत्युपचयार्थं च तदीहितं समाहर्त्तुं व्याप्रियते । यस्मिन्नमृत मुहूर्त्ते स खलु सर्व्वेश्वरोऽस्माकं हृत्पुण्डरीकमध्यास्ते तदैव

सवृत्तिकं चेतो निरुद्धं सत्यय्येवतिष्ठते साम्यञ्च परिपश्यति । धीरस्तमेव देवं विदित्वाऽनीशया मुह्यमानो न खलु शुचा कदर्थीक्रियते ॥ ३ ॥

७६

परमेवाक्षरं प्रतिपद्यते सयोह वै तदच्छायमशरीर-मलोहितꣳ शुभ्रमक्षरं वेदयते ॥ ४ ॥

'परम् एव अक्षरं' सत्यं पुरुषाख्यं 'प्रतिपद्यते' प्राप्नोति 'सः' 'यः ह वै' 'तत्' 'अच्छायं' तमोवर्जितम् 'अशरीरं' शरीरवर्ज्जितम् 'अलोहितं' लोहितादिगुणवर्ज्जितं 'शुभ्रं' शुद्धम् 'अक्षरं' ब्रह्म 'वेदयते' विजानाति ॥ ४ ॥

ईश्वरस्तावत् सदैव सर्व्वत्र वर्त्तते । यस्तु पूतचेतसा तमनु-सन्धत्ते सएव प्राप्नोति ॥ ४ ॥

७७

अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्य-मेकात्मप्रत्ययसारं प्रपञ्चोपशमꣳ शान्तꣳ शिवमद्वैतम् ॥५॥

सत्यं ज्ञानमक्षरम् 'अदृष्टम् अव्यवहार्य्यम्' 'अग्राह्यं' कर्म्मेन्द्रियैः 'अलक्षणम्' अलिङ्गम् 'अचिन्त्यम्' 'अव्यपदेश्यं' शब्दैः । एकः जगत्-कारणं ब्रह्मास्तीति आत्मनः प्रत्ययः सारं प्रमाणं यस्याधिगमे तत् 'एकात्मप्रत्ययसारं' प्रपञ्चस्य संसारस्य उपशमः उपरतिः निवृत्तिः यत्र तं 'प्रपञ्चोपशमं' संसारधर्म्मातीतं 'शान्तं' 'शिवम्' अद्वैतम्' एकम् ॥ ५ ।

ज्ञानघनं ब्रह्म न चक्षुषा गृह्यते नापि करेण परामृश्यते। बुद्धिश्च किञ्चित् व्याप्यमिव तत् मन्तुं विशेषतः प्रतिपत्तुं च न क्षमते। वयं खलु भास्वरेण सहजज्ञानेन तज्जानीमहे आत्मप्रत्ययेन च तदस्तित्वं श्रद्दधीमहि। ज्ञानज्योतिषा यदस्तृतं रूपमवभास्यते आत्मा किल तत्सत्तायां प्रत्येति। सत्यं हि तावत् ज्ञानैकगम्यं आत्मनः खलु तत्रैव प्रत्ययः समुदेति इत्येव समयः। अतः सर्व्वेषामात्मप्रत्ययेनैव ब्रह्मास्तित्वं प्रसिध्यति। यदा हि वयं सहजज्ञानबलेन तदात्मप्रत्ययप्रमाणकं सत्यं शिवं च पुरुषं विजानीम तदैवास्माकं बुद्धिर्व्याकृतस्यास्य जगतोऽचिन्त्यरहस्यानुमानेन तस्य दुरवगाहमतिगभीरं विज्ञानमवगाहते सुविविक्तेन नियमेन शुभोदर्कां तत्समीहामप्यभिव्यनक्ति। अहो यद्यपीयमस्माकं परिच्छिन्ना धीस्तदप्रमेयं पुरुषं विशेषतः प्रतिपत्तुं न क्षमते तथापि तद्विवेकबलेनैव सहजं ज्ञानं नितरामुपचीयते। अतः सर्व्वथा ब्रह्मजिज्ञासुभिर्मुमुक्षुभिस्तावत् कार्य्यरूपमिदं सर्व्वमञ्जसा प्रसमीक्ष्य यत्नतः सा विशोधनीया। विशोधितायां तस्यां वयं हि सहजज्ञानस्यात्मप्रत्ययस्य च प्रसारं निरूपयितुं प्रभवामः।

इदं प्रपञ्चजातं यतो जायमानं विपरिवर्त्तते नास्ति तस्मिन् कश्चिदपि तत्धर्म्मः। सन्ति च न तत्र रागद्वेषामर्षादयो मानसविकाराः। तत् किल शान्तं शिवं च। शुभंयुना तेनेदं सर्व्वं संधार्य्यते। तदेव केवलं निःसङ्गञ्च। न हि कोऽपि तत्समो नाप्यधिको वा विद्यते ॥ ५ ॥

७८

## तदेतत् प्रेयः पुत्रात् प्रेयोवित्तात् प्रेयोऽन्यस्मात् सर्व्व-स्मात् अन्तरतरं यदयमात्मा ॥ ६ ॥

'तत् एतत्' ब्रह्म अक्षरं 'प्रेयः' प्रियतरं 'पुत्रात्' तथा 'प्रेयः वित्तात्' हिरण्यरत्नादेः तथा 'प्रेयः अन्यस्मात्' यत् यत् लोके प्रियत्वेन प्रसिद्धं तस्मात् 'सर्व्वस्मात्' अन्तरतरात् 'अन्तरतरं' 'यत् अयं आत्मा' यदेतत् ब्रह्म, योहि लोके निरतिशयः प्रियः सर्व्वयत्नेन लब्धव्योभवति तदेतत् ब्रह्म सर्व्वलौकिकप्रियेभ्यः प्रियतमं तस्मात् तल्लाभे महान् यत्न आस्थेयः ॥ ६ ॥

ईश्वरस्तावत् सर्व्वेषामन्तरतमः प्रियतमश्च ॥ ६ ॥

७९

## सयोन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियꣳ रोत्स्यतीति ईश्वरोह तथैव स्यात् ॥ ७ ॥

'सः यः' कश्चित् ब्रह्मप्रियवादी 'आत्मनः' ब्रह्मणः सकाशात् 'अन्यं' पुत्रादिकं 'प्रियं ब्रुवाणं' 'ब्रूयात्' किं ब्रूयात् तवाभिमतं पुत्रादिलक्षणं 'प्रियं' 'रोत्स्यति' आवरणं प्राणसंरोधनं प्राप्स्यति विनङ्क्ष्यति 'इति'। सः 'ईश्वरः' समर्थः पर्य्याप्तोऽसाविवं वक्तुं 'ह'। 'तथा' एव स्यात् यत्तेनोक्तं प्राणसंरोधनं तत् प्राप्स्यति ॥ ७ ॥

कलत्रपुत्रादयः सर्व्वेऽप्यागमापायितया अनित्याः। प्रियत्वेन गृहीतैरेभिर्वियुज्यमाना अपि वयं न पुनः कदापि प्रियतमेन तेन तथा भवामः। अहो यः कश्चित् मूढ़धीस्तस्मादन्यत् किमपि

प्रियं ब्रूते तत् तस्य विनश्यत्येवेत्यसंशयितोऽयं वचनोपन्यासः। सर्व्वथा समर्थाः खलु विज्ञाननिपुणाः ब्रह्मोपासकाः विषय-विप्रलुब्धान् विमुग्धानेवं वक्तुं। ये हि तेषां तां कल्याणीं वाचं न जुषन्ते तएव दुःखभाजः। किञ्च स खलु सर्व्वान्तरः पुरुषोऽन्यस्मात् सर्व्वस्मात् प्रेयान्। प्रियत्वेन सम्भाविते च तस्मिन् तत्प्रेमास्पदानामपि सर्व्वेषां प्रीतिरनुसन्धेया। जगतां क्षेमं विधित्सुना तेन यैः समूर्जितैः स्नेहादिभावैर्यान उपलालयितुं वयं समादिष्टास्तत्प्रेप्सुभिरप्यस्माभिस्तैरेव ते समुपलालनीयाः। अथ यदि कश्चिदीश्वरं परिहाय कस्मिंश्चित् मृदात्मके वस्तुनि प्रीत्युपचयेन मोमुह्यते असाम्प्रतं हि तत् तस्य। न सा प्रीतिरपि साम्परायिकी ॥ ७ ॥

८०

आत्मानमेव प्रियमुपासीत। सयआत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥

उज्झित्वा अन्यत् प्रियम् 'आत्मानम् एव' ब्रह्मैव 'प्रियम् उपासीत'। 'सः यः' 'आत्मानम् एव' ब्रह्मैव 'प्रियम् उपास्ते' 'न ह अस्य प्रियं' 'प्रमायुकं' प्रमरणशीलं भवति ॥ ८ ॥

येन खल्वस्माकं मनसि मृदुलानि प्रीतिकुसुममुकुलान्यारेचितानि यत्नतः व्याकोषितैस्तैरेव तमभ्यर्चयेत्। विमृत्युरीश्वरो यस्य प्रियत्वेनोपास्यः तस्य प्रियो न पुनर्मरणपर्य्यवसायी। न स वा तावत् कदापि तेन विरिक्तो भविता ॥ ८ ॥

८१

आत्मा वाअरे द्रष्टव्यः श्रोतव्योमन्तव्योनिदिध्यासितव्यः ॥ ९ ॥

प्रीतिरात्मन्येव मुख्या तस्मात् 'आत्मा वै अरे द्रष्टव्यः' दर्शनार्हः जगद्रूपकार्य्यद्वारेण 'श्रोतव्यः' आचार्य्यतः 'मन्तव्यः' तत्त्वतः ततः 'निदिध्यासितव्यः' निश्चयेन ध्यातव्यः ॥ ९ ॥

परमात्मा हि द्रष्टव्यः। अस्मिन् जड़प्रपञ्चे तस्य पुष्कलं ज्ञानं निःसापत्यं वलं लोकातिगं महिमानं च निरूपयेत्। तेन खलु प्राणस्वरूपेणेदं सर्व्वमनुप्रविष्टं विजानीयात्। गुरूपसत्त्या तन्माहात्म्यपुष्पितां वाचं शृणुयाच्च। एवं प्रयत्नवाहुल्येन यदुपाददीत तस्यासकृदभ्यासेन स मन्तव्यो निदिध्यासितव्यश्च। तस्मिंश्च छिन्नसंशयं मनः सर्व्वथा समादध्यात् ॥ ९ ॥

८२

सवा अयमात्मा सर्व्वेषां भूतानामधिपतिः सर्व्वेषां भूतानाꣳ राजा ॥ १० ॥

'सः वै अयम्' अजः 'आत्मा' 'सर्व्वेषां भूतानाम् अधिपतिः'। 'सर्व्वेषां भूतानां राजा' ॥ १० ॥

ईश्वरएव सर्व्वमिदं नियमयति। नित्यं विधत्ते च तेषां कर्म्मानुवन्धीनि फलानि ॥ १० ॥

८३

तद्यथा रथनाभौ च रथनेमौ चाराः सर्व्व समर्पिताः।

एवमेवास्मिन्नात्मनि सर्व्वाणि भूतानि सर्व्व देवाः सर्व्वे लोकाः सर्व्वे प्राणाः सर्व्वएत आत्मानः समर्पिताः ॥ ११ ॥

'तत् यथा रथनाभौ च रथनेमौ च अराः सर्व्वे समर्पिताः'। 'एवम् एव' 'अस्मिन् आत्मनि' जन्मादिविक्रियारहिते 'सर्व्वाणि भूतानि सर्व्वे देवाः सर्व्वे लोकाः सर्व्वे प्राणाः' 'सर्व्वे एते आत्मानः' प्रतिशरीरानुप्रवेशिनोजीवाः 'समर्पिताः' ॥ ११ ॥

आकाशादीनि सर्व्वाणि भूतानि धर्म्मज्ञानसम्पदा मनुष्यादप्युत्कर्षभाजः सर्व्वे जीवाश्चन्द्रार्कादयः सर्व्वे लोकाः प्राणभृतां सर्व्वे प्राणाः असंख्यलोकस्थानां सत्तास्फूर्त्तिजुषां सर्व्वे आत्मानश्च तमेव परमात्मानमाश्रित्य समवतिष्ठन्ते ॥ ११ ॥

८४

युजे वां ब्रह्म पूर्व्व्यं नमोभिः। अनादिमत्त्वं विभुत्वेन वर्त्तसे यतोजातानि भुवनानि विश्वा ॥ १२ ॥

'युजे' अहं समादधे 'वां' वः युष्माकं कारणभूतं 'ब्रह्म' अस्माकमपि 'पूर्व्व्यं' चिरन्तनं 'नमोभिः'। हे 'अनादिमत्' आद्यन्तशून्यपरमात्मन् 'त्वं' 'विभुत्वेन' व्यापकत्वेन 'वर्त्तसे' 'यतः' तत्तः 'जातानि भुवनानि' 'विश्वा' विश्वानि ॥ १२ ॥

ब्रह्मविदाचार्य्यः अन्तेवासिनमनुशास्ति अहं नमोवाकं युष्माकमुतास्माकञ्च पराचीनं ब्रह्मण्यात्मानं समादधे। यूयमपि मया सह समादधिध्वं ॥ १२ ॥

८५

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती

विनष्टिः । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवा-पियन्ति ॥ १३ ॥

'अथ' 'इह एव सन्तः' अहो वयं कृतार्थाः 'तत्' ब्रह्म 'विद्मः' विजानीमः । 'तत्' 'न चेत्' वेदितवन्तोवयं ततोऽहम् 'अवेदिः' स्याम् । वेदनं वेदः वेदोऽस्यास्तीति वेदी । वेद्येव वेदिः न वेदिः अवेदिः । यद्यवेदिः स्यां कोदोषः स्यात् । 'महती' 'विनष्टिः' विनाशनम्, अहो वयमस्मान्महतोविनाशनान्निर्म्मुक्ताः यत्तत् ब्रह्म वयं विदितवन्तः । 'ये एतत् विदुः अमृताः ते भवन्ति' । 'अथ' ये पुनर्नैवं ब्रह्म विदुः ते 'इतरे' ब्रह्मविदोऽन्ये 'दुःखम् एव' 'अपियन्ति' प्रतिपद्यन्ते ॥ १३ ॥

अहो किमेतदाश्चर्य्यस्थानं यदिहस्थितैरेवास्माभिः सर्व्वथा ब्रह्म विज्ञायते । घोरेऽतिदुस्तरे च संसारान्धकारे निलीनाना-मप्यस्माकं ज्ञानचक्षुषा तत् सत्यज्योतिर्गृह्यते । चित्तमपि तस्मिन् निरुपाधिकां प्रीतिं समुपाहृत्य पापात् प्रमुच्यते । अहो अनेनैव हि पुण्यपरिपाकफलेन वयं कृतार्थतामधिगताः । इह जगति ब्रह्मणा लब्धसत्ताकाः कति जीवाः सन्ति । न पुनस्ते तत् प्रतिपत्तुं क्षमन्ते । अज्ञाननीहारप्रावृतानां हि तेषां तत्तत्त्व-बुभुत्सापि च न सम्भवति । अस्त्येव खल्वस्माकं तत्कृपयोपात्ता सा ह्यपार्थिवा शक्तिर्यया तत्सर्व्वज्ञानबीजमस्माकं प्रतिपित्सा-विषयएव वर्त्तते । अनेनैव हि वयं धन्याः कृतार्थाश्च । अनेनैव चास्माभिर्लब्धं यल्लब्धव्यं । अलं बहुना प्रलपितेन अस्मिन्नेव जन्मन्यस्माकं हृदि तत्सर्व्वलोकललामभूतं ब्रह्म दुरुच्छेद्येन योग-सूत्रेण न सन्नद्धं चेत् नापि च ज्ञानज्योतिषा विदितं तर्हि वय-मनर्थबहुलं विषमं प्राप्स्याम । संसारदावदहनेन दह्यमानाः कं

वा शरणं व्रजाम। दुरात्मनां च दुर्वचोभिर्दारुणैर्विचेष्टितैश्च व्यथिताः दुःखापनुत्तये कं वा प्रतिपत्स्याम। इह हि पापात् मृत्युमुखाच्च नस्त्रातुं कोवा कुशली॥ १३॥

८६

ततोयदुत्तरतरं तद्रूपमनामयम। यएतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति॥ १४॥

'ततः' कार्य्यात् उत्तरं कारणं ततोप्युत्तरं 'उत्तरतरं' कारणस्य कारणं 'यत्' ब्रह्म 'तत्' 'अरूपं' रूपरहितं 'अनामयं' रोगशोकरहितम्। 'ये एतत् विदुः' 'अमृताः' अमरणधर्म्माणः 'ते भवन्ति' 'अथ इतरे' ये तद्ब्रह्म न विदुस्ते 'दुःखम् एव अपियन्ति'॥ १४॥

कारणकूटानां खल्वेकं कारणं ब्रह्म। तच्च रूपहीनं निरामयञ्च। यः खलु विज्ञानप्रकाशे तत् परिपश्यति निवध्नाति च नित्येन सम्बन्धेन सएवामृतमश्नुते तदितरश्च केवलं दुःखमुपभुंक्ते॥ १४॥

८७

ततः परं ब्रह्म परं वृहन्तं यथानिकायꣳ सर्व्वभूतेषु गूढम्। विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति॥ १५॥

'ततः' विश्वकार्य्यस्य 'परं' कारणं 'परं' 'ब्रह्म' 'वृहन्तं' महत् 'यथानिकायं' यथाशरीरं 'सर्व्वभूतेषु गूढम्' अन्तरवस्थितम्। 'विश्वस्य एकं' 'परिवेष्टितारं' स्वात्मना सर्व्वं व्याप्यावस्थितम्। 'तम्' 'ईशं' परमेश्वरं 'ज्ञात्वा' 'अमृताः' 'भवन्ति'॥ १५॥

सर्व्वयोनिस्तस्मादिदं तावत् सर्व्वं समुत्पद्यते। अतस्तत् खलु सर्व्वेषां कारणं। सर्व्वगतमपि तत् न कोऽपि चक्षुषा परिपश्यति। ज्ञानं हि ज्ञानग्राह्यं। तत् पुनर्ज्ञानस्वरूपं। ये खलु सुकृतिनस्तत् विजानन्ति तएव तत्सायुज्यसुखं भजन्ते॥ १५॥

८८

सर्व्वेन्द्रियगुणाभासꣳ सर्व्वेन्द्रियविवर्जितं।
सर्व्वस्य प्रभुमीशानꣳ सर्व्वस्य शरणꣳ सुहृत ॥१६॥

सर्व्वेन्द्रियगुणाः आभास्यन्ते प्रकाश्यन्ते येन ब्रह्मणा तत् 'सर्व्वेन्द्रियगुणाभासं' स्वयन्तु 'सर्व्वेन्द्रियविवर्ज्जितं' सर्व्वकरणरहितम्। 'सर्व्वस्य' जगतः 'प्रभुम् ईशानं' 'सर्व्वस्य' 'शरणं' रक्षितृ 'सुहृत्' मित्रम्॥ १६॥

तेन किल भगवताऽस्माकं ज्ञानं सुखं सामर्थ्यं च सम्प्रतिपादयितुं सर्व्वाणीन्द्रियाणि तदनुगुणानि कृतानि। अहो वयं कामप्यनिर्वाच्यां विश्वविसर्पिणीं निसर्गश्रियमवलोक्य पुलकहर्षैः कदम्बडम्बरायितदेहाः प्रतिक्षणं नेत्रनिर्वाणं लभामहे। विहगकुलकलनादैः श्रुतिलयमूर्च्छनावद्भिरमृतरसनिषेकं विडम्बयद्भिरिवातिमधुरैर्गीतिशब्दैर्भगवतश्चारुचरितचित्रिताभिः कथाभिश्च श्रोत्रसुखं निर्विशाम। रसवन्ति चर्व्यचोष्यादीनि स्वादून्यन्नान्युपयुञ्जानाः क्षुदपायं रासनं च सुखं बहु मन्यामहे। गन्धाढ्यं कुसुमप्रकरमुपाघ्राय घ्राणं नितरामुपतर्पयाम। चलकिसलयदलसम्पर्कसुरभितैर्धीरैः सुखस्पर्शैश्च समीरैः सर्व्वाङ्गसन्नद्धायां त्वचि निर्वृतिं समुपलभ्य संजीवाम च। एतेषां खलु विषयेन्द्रियसंयोगजन्मानां सुखानां सर्व्वमङ्गलाकरः परमेश्वरएव कारणं।

तेनास्माकमिन्द्रियाणि विचित्राभिः शक्तिभिः सम्प्रतिपन्नानि कृतानि तदर्थाश्च तदनुगुणाः कृताः। तस्मादेव हि वयं तत्प्रसादोपात्तमुच्चावचं सुखं भुञ्जामहे। किञ्च प्रयोजनविज्ञानवता तेन खलु भगवता अस्मत्कायनिकाये भुजौ न्यधायिषातां। वयमपि ताभ्यां यावदुपादेयं सर्व्वं प्रतीच्छामः। सोऽस्मान् पद्भ्यां सम्प्रत्यपादयत्। वयमपि ताभ्यां यथाभिरुचितं साधयामः। स किल व्याहारविषयैः कण्ठोष्ठादिभिः समयोजयत्। वयमपि तैश्च सर्व्वं मनीषितं व्याकुर्म्मः। अहो कारुणिकेन तेनास्माकं करणानां एकैकमपि सुखप्रतिपत्तेः पदं कृतं। ज्ञानकर्म्मसाधनं तत्तदिन्द्रियं धारायन्त्रमिव पयःपूरं निरन्तरं नः शुभानि सूते। सर्व्वं खल्विदं निखिलमङ्गलनिदानभूतस्य तस्यैव माहात्म्यप्रख्यापकं।

ईश्वरेण खल्वस्माकं सर्व्वव्यवहारप्रसिद्धये चक्षुरादीनि सर्व्वाणीन्द्रियाणि सम्प्रदत्तानि। तेषां गुणाअपि तत्सान्निध्यादेव प्रकाशन्ते। तस्मिंस्तु सर्व्वथापि न विद्यते तत्सम्बन्धः। स हि विषयावबोधार्थं वा किमपि कार्य्यधुरमुद्वोढ़ुं वा न पुनस्तदपेक्षते। अहो विचित्रमिदं तत्पारमैश्वर्य्यं। स खल्वचक्षुरपि सर्व्वं पश्यति। अकर्णोऽपि सर्व्वं शृणोति। अपाणिरपि सर्व्वमादत्ते। अपदोपि च सर्व्वतो गच्छति। सहि सर्व्वेषां प्रभुरीशानः शरणं सुहृच्च ॥ १६ ॥

८९

महान् प्रभुर्व्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः।
सुनिर्म्मलामिमां शान्तिमीशानोज्योतिरव्ययः ॥ १७ ॥

१०

'महान्' 'प्रभुः' समर्थः जगदुत्पत्तिस्थितिसंहारे 'वै' 'पुरुषः' 'एषः' 'ईशानः' 'ज्योतिः' परिशुद्धो विज्ञानप्रकाशः 'अव्ययः' अविनाशी 'सत्त्वस्य' धर्म्मस्य 'प्रवर्त्तकः' प्रेरयिता । कमर्थमुद्दिश्य 'इमां' 'सुनिर्म्मलां' 'शान्तिम्' उद्दिश्य ॥ १७ ॥

ईश्वरस्यैव कारुण्येन वयं पशव इव न केवलमिन्द्रियवशगाः नापि संसारपाशेन सिताः अपि तु धर्म्मसम्पदा स्वायत्तसिद्धयः सुखं वर्त्तामहे । आत्मप्रसादस्तावत् विषयसुखात् परतरः । तदर्थं स्वस्त्यये च स्वयमीश्वरएव धर्म्मं प्रवर्त्तयति । प्रचोदयति च नो मनस्यभीक्ष्णं कल्याणीं बुद्धिं सर्व्वापदि च वर्म्मभूतं धर्म्मवलं । तेनैव हि वयं धर्म्मी पथि समवतिष्ठमानास्तत्कृपया विमुक्तये प्रभवामः ॥ १७ ॥

---

## दशमोऽध्यायः ।

९०

ओमिति ब्रह्म सर्व्वँऽस्मै देवावलिमाहरन्ति ।
मध्ये वामनमासीनं विश्वे देवाउपासते ॥ १ ॥

'ओम् इति ब्रह्म' ओङ्कारोहि ब्रह्म प्रतिबुद्धेरारोहणायालम्बनम् । 'अस्मै' ब्रह्मणे 'सर्व्वे' 'देवाः' 'वलिं' पूजाम् 'आहरन्ति' । 'मध्ये' 'वामनं' सम्भजनीयं सर्व्वैः 'आसीनं' 'विश्वे' सर्व्वे 'देवाः उपासते ॥ १ ॥

स खलु त्रिजगतामेको हेतुर्यथैव महेश्वरादिभिः शब्दैर्व्यपदिश्यते तथैवोङ्कारेणापि । पृथिव्याः परं लोकमधिश्रयन्तः

सर्व्वे देवास्तमुपासते। अपि चेत् वयं भूतिकामास्तर्हि देववदेव तद्वशतामुपनीताः प्रह्वीभूताश्च प्रीतिप्राकाम्येन तं सभाजयामः ॥ १ ॥

८१

ओमित्येवं ध्यायथ आत्मानꣳ स्वस्ति वः पाराय तमसः परस्तात्। ओँकारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरमम्टतमभयं परञ्च ॥ २ ॥

'ओम् इति एवम्' ओङ्कारालम्बनाः सन्तः 'ध्यायथ' चिन्तयत 'आत्मानं' ज्ञानस्वरूपं परं ब्रह्म 'स्वस्ति' निर्व्विघ्नमस्तु 'वः' युष्माकं 'पाराय' परकूलाय 'तमसः' अज्ञानतमसः 'परस्तात्' ब्रह्मस्वरूपावगमनाय इत्यर्थः। 'ओङ्कारेण एव' 'आयतनेन' साधनेन 'अन्वेति' प्राप्नोति 'विद्वान्' 'यत् तत् शान्तम्' 'अजरं' जरावर्ज्जितम् 'अम्टतं' म्टत्युवर्ज्जितम् 'अभयं' 'परं' निरतिशयं 'च' ब्रह्म ओङ्काराख्यम् ॥ २ ॥

यूयमपि ज्ञानेनातिविमलेन तमोङ्काराभिधेयं परमात्मानं ध्यायत। तेन हि नूनमतिगहनमज्ञानतिमिरं तीर्णास्तं शान्तं निरतिशयञ्च प्राप्स्यथ ॥ २ ॥

८२

ततसवितुर्व्वरेण्यं भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयात् ॥ ३ ॥

'ततसवितुः' तस्य सवितुः जगत्प्रसवितुः प्रेरकस्य सर्व्वकामानाम् विज्ञानानन्दस्वभावस्य अन्तर्यामिनो ब्रह्मणः 'देवस्य' द्योतनात्मकस्य परमेश्वरस्य 'वरेण्यं' वरणीयं 'भर्गः' भर्गं तेजः ज्ञानं शक्तिञ्च 'धीमहि'

ध्यायेम वयम् । 'धियः' बुद्धिवृत्तीः 'यः' सविता 'नः' अस्माकं 'प्रचोदयात्' प्रेरयति सत्कर्म्मानुष्ठानाय ॥ ३ ॥

येनेदं नामरूपं सर्व्वं समुत्पादितं पितेव कारुण्यमातन्वता तेन तत् परिपाल्यते च । विजृम्भते खलु जगति तस्य दुरवगाहा शक्तिर्दुर्विज्ञेयं च ज्ञानं सर्व्वेषां जनिमतां क्षेमाय । स ह्यस्मानुत्पथान्निवर्त्तयितुं धर्म्मेऽ पथि च व्यवस्थापयितुं नित्यमेव शुभां बुद्धिं नोदयति । अहो वयं धर्म्मकामाः सर्व्वानर्थव्यूहादात्मानं समुद्धर्त्तुं तमेव सर्व्वान्तरं पुरुषं निष्प्रत्यूहं ध्यायेम ॥ ३ ॥

९३

## माहं ब्रह्म निराकुर्य्यां मा मा ब्रह्म निराकरोदनिराकरणमस्तु ॥ ४ ॥

'अहं ब्रह्म' 'मा' 'निराकुर्य्यां' न त्यजेयं 'मा' माम् उपासकं 'ब्रह्म' 'मा' 'निराकरोत्' नात्यजत् । मत्कर्त्तृकं ब्रह्मणः 'अनिराकरणम्' अतिरस्कारणम् 'अस्तु' ॥ ४ ॥

स किल कारुणिकः क्वचिदपि कार्य्यवस्तुनि न मामशरणमत्यजत् । अहमनिमिषं तत्कृपालेशमधिगम्य जीवातवे प्रभवामि । यथाहि स मामतिकृपणं नाखपि क्षणमत्याक्षीत् तथा अर्व्वागपि च न त्यक्ष्यति । अहो प्रपन्ने मयि तस्य खलु प्रीतिस्निग्धा दृष्टिर्नित्यमेव निबद्धा । अतोऽहं न कदापि तं त्यजेयं । प्रक्षीभूतः क्षतन्त्रस्यानिशं तत्प्रीतिसुधारसं पिबेयं । तन्निसृष्टश्च प्रहृष्टेन चेतसा सर्व्वं जीवव्यवहारं संसाधयेयं ॥ ४ ॥

९४

**तं वेद्यं पुरुषं वेद यथा मा वोमृत्युः परिव्यथाः ॥ ५ ॥**

'तं' 'वेद्यं' वेदनीयं पूर्णत्वात् 'पुरुषं' परं ब्रह्म 'वेद' 'यथा' 'वः' युष्मान् 'मृत्युः मा' 'परिव्यथाः' मा परिव्यथयतु। न चेत् विज्ञायते पुरुषोमृत्युनिमित्तां व्यथामापन्नादुःखिनएव यूयं स्थः अतस्तन्मा भूत् युष्माकमित्यभिप्रायः ॥ ५ ॥

यूयं तन्निरतिशयं ब्रह्म जानीत। दृष्टानुश्रविकात् सर्व्वस्मादुतात्मनोप्युर्जितया प्रीत्या तदुपतिष्ठत। अथ विषमोत्कटो मृत्युर्विषोल्वणैर्दंशनैर्युष्मान व्यथयितुं न प्रभविष्यति। येन हि स्थितप्रज्ञेन तत् विदितं नित्यं च तत्संयोगसुखं समुपात्तं स खलु जीवन्नेव तावत् भयापादानात् संसारादुत्तरति अमरणधर्म्मत्वं च लभते। अहो तस्य खलु सविधे सर्व्वं शून्यं पूर्णतामेति विपत् सम्पत्त्वमुरीकरोति मृत्युरप्यमृतायते ॥ ५ ॥

९५

**योदेवोऽग्नौ योऽप्सु योविश्वं भुवनमाविवेश। यओषधीषु योवनस्पतिषु तस्मै देवाय नमोनमः ॥ ६ ॥**

'यः देवः अग्नौ यः अप्सु' 'यः विश्वं भुवनं' स्वेन रचितं संसारम् 'आविवेश' प्रविष्टवान्। 'यः' 'ओषधीषु' ओषधिषु 'यः वनस्पतिषु' 'तस्मै' 'देवाय' परमेश्वराय 'नमः नमः' द्विर्व्वचनमादरार्थम् ॥ ६ ॥

यस्तावत् ज्वालाकरालेऽग्नौ निगूढ़स्तं नियमयति नक्रकुम्भीरसङ्कुलेऽनवरततटास्फालनफेनिले व्यापितया गगनाभोगमाकारयज्ञि-

रिव तरङ्गवाहुभिर्नरीनृत्यति च समुद्रे तिष्ठति यस्य च कारुण्यं निदाघेऽतिस्निग्धासु नववारिधारासु प्राणदमन्नं पचन्तीस्वोषध्यादिषु च विद्योतते यस्य स्वप्रकाशस्वरूपेण भूरादिषु त्रिष्वेव लोकेषु नित्यमेव चकास्ति तमधिदेवं कोटिकृत्वः प्रणमामि ॥ ६ ॥

---

## एकादशोऽध्यायः ।

८६

अशब्दमस्पर्शमरूपमव्ययं
तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १ ॥

'अशब्दम् अस्पर्शम् अरूपम् अव्ययं' न व्येति न चीयते 'तथा अरसं नित्यं अगन्धवत् च यत्' ब्रह्म । अविद्यमानमादिकारणमस्य तदिदम् 'अनादि' तथा अविद्यमानोऽन्तोयस्य तत् 'अनन्तं' 'महतः' महत्परिमाणात् अपि 'परं' महत् निरतिशयत्वात् 'ध्रुवं' कूटस्थं नित्यं 'निचाय्य' अवगम्य 'तम्' एवम्भूतं ब्रह्मात्मानं 'मृत्युमुखात्' मृत्युगोचरात् 'प्रमुच्यते' वियुज्यते ॥ १ ॥

स हि वहिर्विकारः पुरुषो न खल्विन्द्रियविषयैः शब्दादिभिर्व्यपदिश्यते । स तावत् निष्कलो नित्यस्वरूपश्च । विज्ञाते च तस्मिन सर्व्वे मृत्युमुखात् प्रमुच्यन्ते । नित्यञ्च तत्संस्थां समुपलभ्य मोदन्ते ॥ १ ॥

९७

**एषसर्व्वेषु भूतेषु गूढ़ात्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ २ ॥**

'सर्व्वेषु भूतेषु' 'एषः' 'गूढ़ात्मा' गूढ़ः आत्मा प्रच्छन्नः ब्रह्मात्मा 'न प्रकाशते' असंस्कृतबुद्धेरविज्ञेयत्वात् । 'दृश्यते तु' संस्कृतया 'बुद्ध्या' 'अग्र्यया' अग्रमिव अग्र्या तया एकाग्रतयोपेतया 'सूक्ष्मया' सूक्ष्मवस्तु-निरूपणपरया कैः 'सूक्ष्मदर्शिभिः' सूक्ष्मं द्रष्टुं शीलं येषां तैः पण्डितैः ॥२॥

स किल निखिलशक्तेर्मूलशक्तिरूपेण प्राणस्य प्राणरूपेणा-त्मनोप्यात्मरूपेण च सर्व्वेषु भूतेषु गूढ़मनुप्रविष्टः । विषयमद-मत्तानां मनसि स तावत् न प्रकाशते । अपि तु विवेकिनां धीराणां व्यवसायात्मिकया सूक्ष्मया च बुद्ध्या परिदृश्यते ॥ २ ॥

९८

**नायमात्मा प्रवचनेन लभ्यो-**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैषवृणुते तेन लभ्य-**
**स्तस्यैषआत्मा वृणुते तनूं स्वाम् ॥ ३ ॥**

'न अयम् आत्मा' ब्रह्मात्मा 'प्रवचनेन' प्रकृष्टवचनेन 'लभ्यः' ज्ञेयः 'न' अपि 'मेधया' ग्रन्थार्थधारणाशक्त्या 'न बहुना श्रुतेन' श्रवणेन । केन तर्हि लभ्य इत्युच्यते । 'यम् एव' ब्रह्मात्मानम् 'एषः' साधकः 'वृणुते' प्रार्थयते 'तेन' साधकेन 'लभ्यः' । सः 'एषः' 'आत्मा' ब्रह्मात्मा 'तस्य' आत्मकामस्य 'वृणुते' प्रकाशयति पारमार्थिकीं 'स्वां' स्वकीयां 'तनूम्' ॥ ३ ॥

ब्रह्मोपलब्धये न चेत् मनसि कोऽपि प्रयत्नातिशयः समुपजायेत तर्हि सत्यामपि समिद्धायां मेधायां श्रुतेऽपि च प्रभूते श्रौते वचसि न केनापि तत् समुपलभ्यते। यथा च कश्चित् अटाट्यमानस्तोयार्थी तोयं प्रार्थयते तथैवोत्कलिकाकुलेन चेतसा रहसि चेत् कोऽपि तदनुनाथते तस्यैव सविधे तत् खल्वात्मनो रूपं प्रकटयति। स किल तेनैव कृतकृत्यः पूतश्च परां निर्वृतिं लभते ॥ ३ ॥

९९

उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयोवदन्ति ॥ ४ ॥

'उत्तिष्ठत' हे जन्तवः ब्रह्मज्ञानाभिमुखाभवत 'जाग्रत' अज्ञाननिद्रायाः घोररूपायाः सर्व्वानर्थवीजभूतायाः क्षयं कुरुत। कथं 'प्राप्य' उपगम्य 'वरान्' प्रकृष्टान् आचार्य्यान् ब्रह्मविदः तदुपदिष्टं सर्व्वव्यापिनं ब्रह्मात्मानं 'निबोधत' अवगच्छत। यथा 'क्षुरस्य' 'धारा' अग्रं 'निशिता', तीक्ष्णीकृता दुःखेनात्ययोयस्याः सा 'दुरत्यया' पद्भ्यां दुर्गमनीया तथा 'दुर्गं' दुःसम्पाद्यं 'पथः' पन्थानं ब्रह्मज्ञानलक्षणं मार्गं 'तत्' 'कवयः' मेधाविनः 'वदन्ति' ॥ ४ ॥

भो भो यूयमुत्तिष्ठत। अनेकानर्थव्रातवीजभूतया अविद्ययोपचितं तमस्तूर्णं निरस्यत। अहो कियच्चिरं तयैवान्ध्यं प्रापिताः स्थास्यथ। कियन्तं कालं वा तत्सर्व्वलोकलोभनीयं धनमधरीकृत्य औदासीन्येन वर्त्तिष्यथ। अहो युष्माकं वर्षपूगपरिमितमायुः क्षीयते। चराचरमिदं सर्व्वं कवलयितुं लेलिहानेन कृता-

न्तेनापि यूयं कैप्रहस्ते परामृष्टाश्च। अतो युष्माभिः क्षणमपि निरुद्यमैर्न स्थातव्यं दीर्घसूत्रिभिर्हीनार्थैश्च न भाव्यं। यूयं वेद-वेदान्तनिष्णातमाचार्य्यमुपगम्य विवृतं द्वारमिव सर्व्वमनोरथानां तं परमात्मानं वित्त। ऊहापोहादिपरिनिष्ठितस्य तस्य वीर्य्यवत्तरैर्वचोभिर्यदुपलभ्यते न तत् स्वधीतेनापि ग्रन्थसहस्रेण। सर्व्वथा ब्रह्मणो मार्गं विचिन्वद्भिर्मुमुक्षुभिरिन्द्रियाणि निघ्नानि कार्य्याणि बुद्धिर्विशोधनीया तितिक्षा समाश्रयणीया सद्वृत्तयः प्रकाममुज्ज्वलाः कार्य्याः चित्तं च परया भक्त्या प्रसाधनीयं। अहो दुर्गमस्तावत् ब्रह्माधिगममार्गः। तथाऽप्येकाग्राणां भगवत्सांमुख्येन सोऽपि सुप्रचाराय कल्पते ॥ ४ ॥

१००

## तदेतद् ब्रह्मापूर्व्वं एतदमृतमभयꣳ शान्त उपासीत ॥५॥

'तत् एतत् ब्रह्म' नास्य पूर्व्वं कारणं विद्यत इति 'अपूर्व्वम्' 'एतत् अमृतम् अभयं' 'शान्तः' सन् लोकः 'उपासीत' ॥ ५ ॥

विश्ववीजं हि ब्रह्म। न किमपि तस्य पूर्व्वकारणं विद्यते। तदनाद्यनन्तं पूर्णमभिप्रपद्य कोऽपि भयस्थानात् न बिभेति। शान्तस्तत् समुपासीत। शान्तिर्हि भूमिः ब्रह्मप्रणयितायाः। यदा किल चित्तं निस्तरङ्गं निराविलं नीरमिवावतिष्ठते तदैव तत्र ब्रह्मस्वरूपं सुव्यक्तं प्रतिभासते। पुत्रवित्ताद्यैषणया विक्षिप्तेन इन्द्रियलौल्याच्च कश्मलीकृतेन मनसा न कोऽपि ब्रह्म समधिगच्छति। नापि तदानन्दमुपभोक्तुं क्षमते। अतः शान्तस्तत् पर्य्युपासीत ॥ ५ ॥

---

## द्वादशोऽध्यायः ।

१०१

वृक्षइव स्तब्धोदिवि तिष्ठत्येकः ।
तेनेदं पूर्णं पुरुषेण सर्व्वम् ॥ १ ॥

'वृक्षः इव स्तब्धः' निश्चलः 'दिवि' द्योतनात्मनि स्वे महिम्नि तिष्ठति एकः' अद्वितीयः परमात्मा। 'तेन' अद्वितीयेन 'पुरुषेण' पूर्णेन 'इदं सर्व्वं' 'पूर्णं' नैरन्तर्य्येण व्याप्तम् ॥ १ ॥

इदं तावत् विश्वचक्रमीशितृत्वेनेशितुर्भ्राम्यमानं श्रेयसे विपरिणममानं च तस्यैवार्थसिद्धये व्याप्रियते। स खलु तत्साक्षितया नियन्तृत्वेन च कूटस्थइवावतिष्ठमानः शुभं स्वसमीहितं कार्त्स्न्येन सम्पाद्यमानं पश्यति। न च मनागपि व्यतिक्रममाशङ्कते। तथाहि स्रोतस्विनीनामोघवेगेन पतद्भिः कूलच्छेदैः कच्छस्थाः ग्रामनगरादयः प्रलीयन्ते। सर्व्वतः संप्लुतैः पयःपूरैः कूटवाटविटपिपरिशोभिता भूसन्निवेशास्तरङ्गोद्गारघोरघर्घरं सागरमपि विडम्बयन्ति। श्रवणभैरवैश्च रवैर्दिगन्तान् ध्वनयद्भिर्युगान्तप्रभवैर्वायुभिः स्पर्य्यमानैरपि भीषणैर्भूकम्पैश्च बहवो जीवाः समुत्साद्यन्ते। अहो यद्यप्येतानि दुर्निमित्तान्यापातविषमाणि तथापि श्रेयस्कामेन भगवता तानि शुभोदर्कान्येव कृतानि। किञ्च यदा हि प्रावृषि जलधरोपरोधनीरन्ध्रे नभसि निरन्तरप्रवृत्तैः करकापातैर्गभीरैर्घनगर्ज्जितैश्च प्रलयविभ्रमं जनयन्निव वज्रनिर्घोषः कर्णौ वधिरीकुरुते यदा किल कश्चिज्ज्वालामुखः शैलोऽत्युल्बण-

रश्मिग्रङ्गारैः पार्श्वस्थान् पशुपक्षिमनुष्यसम्बाधान् जनपदान् भस्मीकरोति यदा च कस्मिंश्चित् राष्ट्रविप्लवे समुपस्थिते प्रवृत्ते च शस्त्रसम्पाते शौटीराः किल नरशोणितैः श्वशृगालादीन उपतर्पयन्ति तदाप्यल्पीयस्यापि व्यतिपातशङ्कया न स तावत् पर्य्याकुलीक्रियते ।

स खलु निरालम्बः स्वप्रकाशो भूमा स्वे महिम्नि राजते। अन्यत् च सर्व्वं तमाश्रित्य तिष्ठति। तेनेवेदं चराचरं सर्व्वं पूर्णं ॥ १ ॥

१०२

यथा सौम्य वयांꣳसि वासोवृक्षꣳ संप्रतिष्ठन्ते ।
एवꣳ ह वै तत् सर्व्वं परआत्मनि संप्रतिष्ठते ॥ २ ॥

'यथा' येन प्रकारेण हे 'सौम्य' प्रियदर्शन 'वयांसि' पक्षिणः 'वासीवृक्षं' वासार्थं वृक्षं 'संप्रतिष्ठन्ते एवं ह वै तत्सर्व्वं' स्थावरजङ्गमं 'परे आत्मनि' अक्षरे ब्रह्मणि 'संप्रतिष्ठते' ॥ २ ॥

सर्व्वेऽपि वैकारिकास्तमतिव्यापिनमाश्रित्य तिष्ठन्ति। सत्यपि सम्बन्धसामान्ये अस्माकं पुनस्तेभ्यो विशेषः कोऽप्यस्ति यथा हि पुत्राः पितरमाश्रयन्ते तथा वयमपि तं ॥ २ ॥

१०३

एकोदेवः सर्व्वभूतेषु गूढः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा ।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षी चेता केवलोनिर्गुणश्च ॥ ३ ॥

'एकः' अद्वितीयः 'देवः' द्योतनस्वभावः परमेश्वरः 'सर्व्वभूतेषु' 'गूढ़ः' प्रच्छन्नः 'सर्व्वव्यापी' 'सर्व्वभूतान्तरात्मा' सर्व्वेषां भूतानां अन्तरात्मा अन्तर्यामी। 'कर्म्माध्यक्षः' सर्व्वप्राणिकृतविचित्रकर्म्मणामध्यक्षः। सर्व्वाणि भूतानि अधिवासयतीति 'सर्व्वभूताधिवासः' प्रतिष्ठा सर्व्वस्य जगतः 'साक्षी' सर्व्वद्रष्टा 'चेता केवलः' असङ्गः 'निर्गुणः च' सत्त्वादिगुणरहितश्च ॥ ३ ॥

यः खलु शैलवनकाननपरिवृतायाः पृथिव्याः पतिः सएव चन्द्रार्कादीनामपि ज्योतिश्चक्राणां। यश्च मे सविता स्थितिनाशयोर्हेतुश्च सएव सर्व्वजगतामपि। स खलु भूतेषु सर्व्वेष्वन्तरः सर्व्वमिदं चराचरमनुशास्ति। स हि सर्व्वव्यापी सर्व्वान्तरात्मा च। विज्ञानात्मनां शरीरभेदेन विभिन्नानामप्यन्तः सएव पूर्णप्रकाशो भ्राजते। स खलु कर्म्माध्यक्षः सर्व्वसाक्षी सर्व्वं देशमभिव्याप्य सर्व्वाण्येव च पश्यति। स तावत् साक्षी सन्नौदासीन्येनास्मान्नावेक्षते अपितु कर्म्माध्यक्षोऽस्माकं सर्व्वाण्याचरितानि दण्डपुरस्काराभ्यां सम्भाव्य नित्योत्थानवतीं कामपि भूतिमापादयति। सर्व्वगतोऽपि न स तावत् केनापि लिप्यते। नास्ति तस्मिन्नौत्पत्तिकः कश्चित् शारीर उत वा मानसो धर्म्मः। सहि चिदेकरसः स्वप्रकाशश्च ॥ ३ ॥

१०४

सर्व्वा दिश ऊर्द्धमधश्च तिर्य्यक्<br>
प्रकाशयन् भ्राजते यद्वनड्वान्।<br>
एवं स देवो भगवान् वरेण्यो<br>
योनिः स्वभावानधितिष्ठत्येकः ॥ ४ ॥

'सर्व्वादिशः ऊर्द्धं अधः च' 'तिर्य्यक्' पार्श्वदिशः 'प्रकाशयन्' 'भ्राजते' दीप्यते 'यत्' यथा 'उ' 'अनड्वान्' आदित्यः। 'एवं सः देवः' द्योतनस्वभावः परमेश्वरः 'भगवान्' ऐश्वर्य्यसमन्वितः 'वरेण्यः' वरणीयः सम्भजनीयः 'योनिः' कारणं कृत्स्नस्य जगतः पृथिव्यादीनां। 'स्वभावान्, स्वस्वभावान् गुणान् 'अधितिष्ठति' नियमयति 'एकः' अद्वितीयः परमात्मा ॥ ४ ॥

भूताधिपतिरीश्वरस्तावत् सूर्य्य इव सर्व्वमिदमवभासयन् प्रभासते। स हि केनापि न सृज्यते प्रकाश्यते वा। स खलु स्वयम्भूः स्वयम्प्रभश्च। सएव खलु वायौ शब्दमग्नावौष्ण्यं जले शैत्यं वज्रे बलं नक्षत्रे च ज्योतिः समयोजयत्। सर्व्वेष्वपि वैकारिकेषु द्रव्येष्वन्योन्यविलक्षणान् तान् तान् गुणान् न्यधापयत् च ॥ ४ ॥

१०५

**नैनमूर्द्धं न तिर्य्यञ्चं न मध्य परिजग्रभत्।**
**न तस्य प्रतिमा अस्ति यस्य नाम महद् यशः ॥ ५ ॥**

'एनं' ब्रह्मात्मानम् 'ऊर्द्ध' ऊर्द्धदिशि कश्चिदपि 'न परिजग्रभत्' न परिगृहीतवान् 'तिर्य्यञ्चम्' न पार्श्वे 'न' च 'मध्ये' ऊर्द्धादिषु दिक्षु ब्रह्म न केनापि परिग्राह्यं। 'न' 'तस्य' ईश्वरस्य सर्व्वज्ञस्य अचिन्त्यशक्तेः सदृशाभावात् 'प्रतिमा' उपमा 'अस्ति' 'यस्य' ईश्वरस्य 'नाम' अभिधानं 'महद् यशः' महदिगाद्यनवच्छिन्नं सर्व्वत्र परिपूर्णं यशः कीर्त्तिः ॥ ५ ॥

अहो प्रतिभानवता निपुणतमेनापि न खल्वगाधज्ञानोदधेस्तस्येशितुर्गभीरत्वं प्रमीयते। नास्ति तत्प्रतिमा। स च केनापि नोपमीयते। नार्हति खलु सवितृप्रकाशः सर्व्वा-

वभासकस्य तस्य तावत् ज्योतिषस्तुलामुद्वोढ़ुं दम्भोलिर्वा समुज्जितस्य वीर्य्यस्य । पितोरकृतकं वात्सल्यं सुहृदां निरुपाधिकं प्रेम पतिव्रतानाञ्च भर्त्तृवाल्लभ्यं तस्मादेव सान्द्रप्रेमसुधार्णवात्दुद्भिन्नं विम्बमिव परिशोभते। न पुनस्तस्य शारीर उत मानसो वा कश्चित् विकारः सम्भवति। स खलु शरीरमनसोर्निर्म्माता। अहो व्याततं तद्यशोवितानं व्योमवत् सर्व्वतः प्रसृतं। लोकातिगं महत्त्वं च भुवि दिवि च विद्योतते। तस्मादेव महायशा इति तन्नाम निरुच्यते ॥ ५॥

१०६

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो
य एनमेवं विदुरमृतास्ते भवन्ति॥ ६॥

'अस्य' 'ईश्वरस्य 'रूपं' स्वरूपं रूपादिरहितं निर्व्विशेषं 'संदृशे' दर्शनविषये 'न तिष्ठति'। इन्द्रियागोचरत्वादेव 'न चक्षुषा पश्यति' 'कश्चन' कोऽपि 'एनम्' ईश्वरं चक्षुरित्युपलक्षणं सर्व्वैरिन्द्रियैरपि कोऽपि न तत् ग्रहीतुं शक्नुयात्। 'हृदा' हृत्स्थया मनस ईष्टे नियन्तृत्वेन इति मनीट् तया 'मनीषा' बुद्ध्या विकल्पवर्ज्जितया 'मनसा' मननरूपेण सम्यक्दर्शनेन 'अभिक्लृप्तः' अभिसमर्थितः अभिप्रकाशितः ईश्वरोभवति। 'ये एनं' ब्रह्म 'एवं विदुः अमृताः ते भवन्ति' ॥ ६॥

ईश्वरस्तावन्न चक्षुषो विषयः। स किल विमलेन ज्ञानेनैव गृह्यते। तदेकाग्रमनास्तत्परायणश्च ज्ञानप्रसादेन छिन्नसंश-

यस्तं ज्ञानघनं समनुपश्यति। तत्संयोगजन्यमक्षय्यमानन्दमनुभूय अमृतत्वाय कल्पते च॥ ६॥

१०७

श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यन्न विद्युः।
आश्चर्य्यो वक्ता कुशलोऽस्य लब्धा
आश्चर्य्यो ज्ञाता कुशलानुशिष्टः॥ ७॥

'श्रवणाय' श्रवणार्थं 'अपि यः' ब्रह्मात्मा 'न लभ्यः बहुभिः' अनेकैः। 'शृण्वन्तः अपि बहवः' अनेके अन्ये 'यं' ब्रह्मात्मानं 'न विद्युः' न विदन्ति अभागिनोऽसंस्कृतात्मानो न विजानीयुः किञ्च अस्य 'वक्ता आश्चर्य्यः' अद्भुतवदिवानेकेषु कश्चिदेव भवति। तथा श्रुत्वापि 'अस्य' ब्रह्मात्मनः 'लब्धा कुशलः' निपुण एव भवति। तस्य निपुणः 'ज्ञाता' 'आश्चर्य्यः' कश्चिदेव भवति 'कुशलानुशिष्टः' कुशलेन निपुणेनाचार्य्येणानुशिष्टः सन् संशिक्षितः सन्॥ ७॥

केऽप्यननुशिष्टाः ब्रह्म विज्ञातुं न प्रभवन्ति। अनुशिष्टा अप्यन्ये श्रद्धाभावात् बुद्धेरयोगतश्च तत् न विजानन्ति। सर्व्वथा सूक्ष्मावगाहिनी धीरेव ब्रह्मस्वरूपं तदीहितञ्च निरूपयितुं शक्ता। तदन्यथावृत्त्या सर्व्वेषु जनपदेषु सर्व्वास्वपि च जातिषु तत्त्वबुभुत्सूनां लक्षवर्णानामध्रुवैव प्रतिपत्तिरुपजायते। ये पुनः सहृदयः श्रद्धावन्तश्च तएव ब्रह्म विज्ञातुमीशते। ये हि तत्त्वार्थनिष्णाताः निर्म्मलस्वान्ताश्च तएव तदुपदिशन्ति। अहो कुतः स कुशली यः खल्वन्तेवासिनमनुशास्ति। कुतो वा स जिज्ञा-

सुधीऽनुशिष्टः ब्रह्म विजानीयात्। सर्व्वथा प्रयत्नवता पुरुषेणैव परतत्त्वं समुपलभ्यं। अव्यवसायिनान्तु तत् दूरापास्तं। ब्रह्मसमाधानं वा कथं तेषां सम्भवति॥ ७॥

१०८

पराचः कामाननुयन्ति बालास्ते
मृत्योर्यन्ति विततस्य पाशम्।
अथ धीरा अमृतत्वं विदित्वा
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते॥ ८॥

'पराचः' बहिर्गतानेव 'कामान्' विषयान् 'अनुयन्ति' अनुगच्छन्ति 'बालाः' अल्पप्रज्ञाः 'ते' तेन कारणेन 'मृत्योः' 'विततस्य' विस्तीर्णस्य सर्व्वतोव्याप्तस्य 'पाशं' पाश्यते बध्यते येन तं 'यन्ति' गच्छन्ति। यत एवं 'अथ' तस्मात् 'धीराः' विवेकिनः 'अमृतत्वं' 'ध्रुवं' 'विदित्वा' 'अध्रुवेषु' अनित्येषु सर्व्वपदार्थेषु 'इह' संसारे 'न प्रार्थयन्ते' किञ्चिदपि। ८॥

ये खल्वनित्यं बाह्यं विषयं समुपसेवन्ते आत्मानं तदवभासकं च परमात्मानं न पश्यन्ति कामवशीकृता वहिर्मुखास्तएव व्यायतेन मृत्युपाशेन संयम्यन्ते। परागविषयं दुरापूरं च कामित्वं मृत्योः स्वरूपं। कार्य्यकारणस्वभावः स्वाभाविको नियमश्च तत्पाशः। यः खलु वासनाकवलितोऽनिशमिन्द्रियार्थेषु सज्जते स नूनं यथोक्तस्वरूपेण मृत्युपाशेन सितोऽनर्थेऽतिगम्भीरे निपतति। स हि समुपलभ्येदं मानुषं जन्म विषयदुर्म्मदो मन्दाभिनिवेशेन यथाकारी बालइव विचेष्टते।

स्वयमनिच्छन्नपि बलादेव पुरुषार्थात् च्यवते च। अपितु ये विवेकिनो धीराश्च तएव शाश्वतेन ब्रह्मणा स्वस्य नित्यं सम्बन्धं समीहमाना न किमप्यध्रुवं प्रार्थयन्ते। तएव खलु नितरामवशीकृतमात्मानं धर्म्मेण शासनेन संनियम्य साधयन्तश्च धातुः शुभं समीहितं सर्व्वथा मोदन्ते ॥ ८ ॥

१०९

येनाहं नामृता स्यां किमहं तेन कुर्य्याम्। असतोमा सद्गमय तमसोमा ज्योतिर्गमय मृत्योर्म्माऽमृतं गमय। आविरावीर्म्मएधि। रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ ९ ॥

'येन अहं न अमृता स्यां किम् अहं तेन कुर्य्याम्।' 'असतः' संसारात् 'मा' मां 'सत्' ब्रह्म 'गमय'। 'तमसः' अज्ञानात् 'मा' मां 'ज्योतिः' ब्रह्माधिगमं 'गमय'। 'मृत्योः' 'मा' मां 'अमृतं गमय'। हे 'आविः' स्वप्रकाशब्रह्मचैतन्य 'मे' मदर्थं 'आवीः एधि' आवीरेधि अज्ञानावरणापनयेन प्रकटीभव। हे 'रुद्र' परमेश्वर 'यत्' 'ते' तव 'दक्षिणं मुखम्' उत्साहजनकम् आह्लादकरं 'तेन' अशनायापिपासाशोकमोहान्वितं 'मां पाहि' रक्षस्व 'नित्यं' सर्व्वदा ॥ ९ ॥

अहो किन्तेन मे कार्य्यं येनाहममर्त्यस्वरूपं पुरुषं समधिगम्य विमृत्युर्न स्यां। पुत्रवित्तादीनि सर्व्वाण्येवाध्रुवाणि। अथवा ध्रुवाणि चेत् तर्हि तं परप्रेमास्पदं विना किमेतैः। ब्रह्मण् तदेव मे सम्भावय येनाहं त्वामुपलभेयं। अनेकानर्थसङ्कटात् संसारदरीकुहरादुत्तार्य्य सद्वर्त्मना मामुपनय। अतिघोरमज्ञानतिमिरं

बुद्धस्य मनसि मे ज्ञानज्योतिराविस्कुरु। अमृतानन्दरूपानुभूतौ मां नियोजय। स्वप्रकाशात्मना च नित्यं मयि सान्निध्यमुपकल्पय। नोचेत् दुर्विपन्नस्ते रुद्रं सुखं प्रेच्छिष्ये। यदाहं त्वां प्रसादविमुखं निर्वर्णयितुं नेशे तदा खलु मे अन्धकारावृतमिव सर्व्वमिदमाभाति। अहो त्वमसि मे तमसि प्रदीपः पिपासार्त्तस्य तोयं विश्रामपदं च हृदयस्य ॥ ९ ॥

---

## त्रयोदशोऽध्यायः ।

११०

सत्यमेव जयते नानृतम्। सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक् ज्ञानेन। येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम् ॥ १ ॥

'सत्यम् एव' 'जयते' जयति 'न अनृतम्'। 'सत्येन' अनृतत्यागेन मृषावचनत्यागेन 'लभ्यः' प्राप्यः 'तपसा' मनस एकाग्रतया 'हि एषः' 'आत्मा' ब्रह्मात्मा 'सम्यक् ज्ञानेन' यथानुभूतब्रह्मदर्शनेन। 'येन' सत्येन तपसा ज्ञानेन 'आक्रमन्ति' आक्रामन्ति 'ऋषयः' दर्शनवन्तः 'हि' 'आप्तकामाः' विगततृष्णाः 'यत्र तत् सत्यस्य परमं निधानम्' आश्रयः परब्रह्म ॥ १ ॥

शान्तेन मनसा सत्यं निरूपय। सत्ये च पथि मतिं कुरु। अथ सत्यस्य विजयदुन्दुभिनादेन त्वमपि विजयमहोत्सवं प्राप्स्यसि। अपि चेत् ब्रह्म समधिगन्तुं समीहसे तर्हि सर्व्वात्मना

सत्यं शरणमन्विच्छ । अनृतमनार्जवञ्च दूरं परिहर । ब्रह्म हि सत्यस्य परमं निधानं । सुनिश्चितेन सुगृहीतेन च सत्येनैकाग्रया बुद्ध्या सम्यक्ज्ञानेन च तत् खलु समुपलभ्यते । निराशिषः क्षीणदोषाश्च यतयः प्राक् एतैरुपायैर्यतमानाः परां सिद्धिमधिजग्मुः ॥ १ ॥

१११

दिव्योह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरोह्यजोऽप्राणोह्यमनाः । यं पश्यन्ति यतयः क्षीणदोषाः ॥ २ ॥

'दिव्यः' द्योतनवान् 'हि' 'अमूर्त्तः' सर्व्वमूर्त्तिवर्ज्जितः 'पुरुषः' पूर्णः सह बाह्य बाह्याभ्यन्तरेण वर्त्तत इति 'सबाह्याभ्यन्तरः' 'हि' न जायते कुतश्चिदिति 'अजः' अविद्यमानः प्राणवायुर्यस्मिन् असौ 'अप्राणः' 'हि' अविद्यमानं मनोयस्मिन् सोऽयम् 'अमनाः' 'यं' ब्रह्मात्मानं 'पश्यन्ति' उपलभन्ते 'यतयः' यत्नशीलाः 'क्षीणदोषाः' क्षीणपापाः ॥ २ ॥

स हि भूमस्वभावः स्वप्रकाशात्मना सर्व्वत्रैवावभासते। सर्व्वमिदमशक्यपरिच्छेदं वस्तुजातं तदस्तित्वे प्रमाणं । इह हि वाय्वादिव्यपाश्रया या काचित् शक्तिरस्ति तयैव स सर्व्वशक्तिरित्यनुमीयते। न विद्यते तस्य किमपि परिच्छिन्नं रूपं। स खल्वखण्डरूपतया सर्व्वेषां जनिमतां कायनिकाये नित्यमेव विद्योतते। स पुनर्न जायते नाप्यपक्षीयते सर्व्वेष्वपि कालेषु नित्यात्मना चकास्ति। स खलु कश्चित् मर्त्त्यइव वायुं समाश्रित्य न प्राणिति । सएव प्राणः। प्राणानामपि स प्राणः । मनस्तावत् तज्जन्यं परिच्छिन्नञ्च । नैतत् खलु तस्मिन्नुपपद्यते। न पुनस्तस्य

ज्ञानं वृत्तिजन्यं । अपि तु स्वाभाविकं हि तत् । स खलु धूत-पापैर्विचिन्वद्भिः सद्भिर्ज्ञानप्रसादेनैव समुपलभ्यते ॥ २ ॥

११२

योदेवानामधिपोयस्मिन् लोकाअधिश्रिताः । यईशेऽस्य द्विपदश्चतुष्पदः सवाएषमहानजआत्मा ॥ ३ ॥

'यः' परमेश्वरः 'देवानाम्' 'अधिपः' स्वामी 'यस्मिन्' परमेश्वरे सर्व्वकारणे 'लोकाः' 'अधिश्रिताः' आश्रिताः । 'यः' परमेश्वरः 'अस्य' 'द्विपदः' मनुष्यस्य 'चतुष्पदः' गवादेः 'ईशे' ईष्टे 'सः वै एषः महान् अजः आत्मा' ब्रह्मात्मा ॥ ३ ॥

आकृमिकीटं सर्व्वेषामथ लोकान्तरवासिनां देवानामपि सएव शरण्योऽधिपश्च । यदध्यक्षतया मनुष्याः पशवश्च भोज्य-मन्नादिकं चिरमधिगच्छन्ति सएव महान् अजआत्मा च ॥ ३ ॥

११३

अदृष्टोद्रष्टाऽश्रुतः श्रोताऽमतोमन्ताऽविज्ञातोवि-ज्ञाता ॥ ४ ॥

'अदृष्टः' न दृष्टः चक्षुर्गोचरत्वमनापन्नः कस्यचित् स्वयन्तु 'द्रष्टा' तथा 'अश्रुतः' श्रोत्रगोचरत्वमनापन्नः स्वयन्तु 'श्रोता' तथा 'अमतः' मननविषयत्वमनापन्नः स्वयन्तु 'मन्ता' यतः सोऽदृष्टोऽश्रुतोऽमतोऽतएव 'अविज्ञातः' स्वयन्तु 'विज्ञाता' ॥ ४ ॥

अहो न खलु तस्य पूर्णस्वरूपस्य ज्ञानसाधनानीन्द्रियाणि

विद्यन्ते। अस्माभिः पुनस्त्वैर्यत्यत् विषयीक्रियते तत् सर्व्वमेव सर्व्वज्ञेन तेन प्रागेव विदितं। यदस्माकमविदितमस्ति तदपि च सएव वेद। स हि सामान्यतो विशेषतश्च सर्व्वं विजानाति। स्वयन्त्वञ्जसा केनापि न परिज्ञायते च ॥ ४ ॥

११४

## सएषनेति नेत्यात्माऽगृह्योन हि गृह्यते ॥ ५ ॥

'सः एषः' 'आत्मा' ब्रह्मात्मा यद्यत् इन्द्रियमनोगोचरत्वेन निर्दिष्टं वस्तु तत्तत् न ब्रह्मेति 'न इति न इति' 'अगृह्यः न हि गृह्यते' करणा-विषयत्वात् ॥ ५ ॥

स हि जन्मस्थित्यादिहेतुर्विकारेभ्यो वहिर्वर्त्तते इत्येष एव तस्य निर्देशः। यत् पुनश्चक्षुरादिभिर्गृहीतं मननविषय-तामापद्यते नेदृशं हि तत्स्वरूपं। स खलु सर्व्वथा चक्षुरादी-नामविषयएव। विज्ञानप्रकाशेनैवाभ्युपगम्यश्च ॥ ५ ॥

११५

## सएषसर्व्वस्येशानः सर्व्वस्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च ॥ ६ ॥

'सः एषः' ब्रह्मात्मा 'सर्व्वस्य ईशानः सर्व्वस्य अधिपतिः' 'सर्व्वम्' 'इदं' जगत् 'यत् इदं किञ्च' अनवशिष्टं 'प्रशास्ति' नियमयति ॥ ६ ॥

आदेवमानवं सर्व्वमेव तद्वशे तिष्ठति। न च कोऽपि तमति-वर्त्तितुं क्षमते ॥ ६ ॥

११६

ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदोवदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ ७ ॥

'ऋतं' सत्यम् अवश्यम्भावित्वात् कर्म्मफलं 'पिबन्तौ' एकस्तत्र कर्म्मफलं पिबति भुंक्ते नेतरः तथापि पातृसम्बन्धेन पिबन्तावित्युच्यते 'सुकृतस्य' स्वयंकृतस्य कर्म्मणः 'लोके' शरीरे 'गुहां' गुहायां बुद्धौ 'प्रविष्टौ' 'परमे परार्द्धे' प्रकृष्टस्थाने। तौ च 'छायातपौ' एव विलक्षणौ संसारित्वासंसारित्वेन 'ब्रह्मविदः' 'वदन्ति' कथयन्ति। न केवलं ब्रह्मविद एव वदन्ति 'पञ्चाग्नयः' गृहस्थाः 'ये च' 'त्रिणाचिकेताः' त्रिःकृत्वोनाचिकेतोऽग्निश्चितोयैस्ते ॥ ७ ॥

विज्ञानात्मा तत्प्रतिष्ठाभूतः सर्व्वगतः परमात्मा चोभावपीमं शरीरसङ्घातमवष्टभ्य वर्त्तते। अस्माभिस्तदुभयमपि निर्विचिकित्सया बुद्ध्या परिगृह्यते। तौ पुनश्छायातपाविव परस्परविलक्षणौ। छाया यथा आतपं विहाय न तिष्ठति तथैव विज्ञानात्मा विनाकृतः परमात्मना सत्तां न लभते। तयोरेकः कर्म्मफलं प्रयच्छति। अन्यस्तु तत् यथासुखं भुङ्क्ते। न हि केवलं तत्त्वार्थनिष्णातास्तदुभयमेवं विलक्षणस्वभावं मन्यन्तेऽपि तु कृत्यशासः कर्म्मिणोऽपि ॥ ७ ॥

---

# चतुर्द्दशोऽध्यायः ।

११७

## योवै भूमा तत् सुखं नाल्पे सुखमस्ति ।
## भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः ॥ १ ॥

'यः वै' 'भूमा' महत् निरतिशयं ब्रह्म 'तत् सुखं' 'न अल्पे' ब्रह्मातिरिक्ते कस्मिंश्चिदपि वस्तुनि 'सुखं' सम्पूर्णम् 'अस्ति' 'भूमा एव सुखम्' अतः 'भूमा तु एव' 'विजिज्ञासितव्यः' ॥ १ ॥

अथ नान्तवत् किमप्यस्मान् सुखयति । भूमैवास्माकं सुखं न पुनस्तद्विलक्षणं सुखमस्ति । विषयसमुत्थं सुखं नास्माकं प्रीणनाय प्रभवति । अनित्यं तुच्छं हि तत् । कदापि धर्म्मं कदापि धर्म्म-प्रतिरूपं च । कदापि त्यज्यं कदापि वा ग्राह्यं च । भूमैवास्माकं सुखभूमिस्तृप्तिहेतुश्च । अतः सएवान्वेष्टव्यो विजिज्ञासितव्यश्च ॥१॥

११८

## सभगवः कस्मिन् प्रतिष्ठितइति स्वे महिम्नि ॥ २ ॥

हे 'भगवः' भगवन् 'सः' भूमा ब्रह्मात्मा 'कस्मिन् प्रतिष्ठितः इति' इत्युक्तवन्तं शिष्यं प्रति आह आचार्य्यः 'स्वे महिम्नि' आत्मीये महिम्नि प्रतिष्ठितोभूमा ॥ २ ॥

ईश्वरः खलु निरालम्बः स्वतन्त्रो मुक्तश्च । यथासौ कार्य्य-कारणसङ्घातस्तस्मिन्नेव संप्रतिष्ठते तथा स क्वापि न प्रति-

तिष्ठति। इदं तावत् ब्रह्माण्डजातं तस्मिन्नेव सन्नद्धमिव लम्बते। सहि शङ्कुरिव तत् दधाति। स पुनः केनापि न विष्टतः पिनद्धो वा। स खलु स्वे महिम्नि राजते। न विद्यते तस्य किमपि कारणं नाप्यधिष्ठानं च ॥ २ ॥

११९

सएवाधस्तात् सउपरिष्टात् सपश्चात् सपुरस्तात् सदक्षिणतः सउत्तरतः। ईशानोभूतभव्यस्य सएवाद्य सउ श्वः ३॥।

'सः एव' भूमा 'अधस्तात्' विद्यते तथा 'सः उपरिष्टात् सः पश्चात् सः पुरस्तात् सः दक्षिणतः सः उत्तरतः'। सभूमा 'ईशानः' 'भूतभव्यस्य' कालत्रयस्य 'सः एव' नित्यः कूटस्थः 'अद्य' इदानीं वर्त्तमानः 'सः' 'श्वः' 'उ' अपि वर्त्तिष्यते ॥ ३ ॥

स खल्वस्माकमूर्द्धमधश्च दक्षिणत उत्तरतश्च पुरस्तात् पश्चाच्च तिष्ठति। सहि सर्व्वदा सर्व्वत्र विद्योतते। अपि चेत् वयमभ्रंलिहं गिरिकूटमधिरोहामस्तमेव तत्र दीप्यमानं प्रपद्यामहे। अगाधमतिगभीरमम्भोनिधिं वा संविशामस्तमेव तत्र भान्तं समनुपश्यामः। स यथा मध्यन्दिनमलङ्कुर्व्वाणस्य मार्त्तण्डस्यातिभास्वरे प्रभापटले भ्राजते तथा तमस्विन्या गाढ़े तमसि। अहो सर्व्वमिदं तद्राजपदं। सर्व्वत्रैव च तस्य स्फारा दृष्टिः। अव्याहतं हि तस्य सर्व्वदेशकालवृत्तित्वं। इहामुत्र चाकुण्ठितं तस्येशित्वं च। स यथा अद्य वर्त्तते परेद्युरपि तथा वर्त्तिष्यते ॥ ३ ॥

१२०

य एकोऽवर्णो बहुधा शक्तियोगात्
वर्णाननेकान्निहितार्थो दधाति ।
विचैति चान्ते विश्वमादौ स देवः
स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥

'यः' 'एकः' अद्वितीयः परमात्मा 'अवर्णः' निर्व्विशेषः 'बहुधा' नाना 'शक्तियोगात्' 'निहितार्थः' गृहीतप्रयोजनः प्रजानां 'वर्णान्' प्रयोजनपदार्थान् 'अनेकान्' 'दधाति' विदधाति प्रजाभ्यः । 'आदौ' 'अन्ते' 'च' मध्ये च 'विश्वं' यस्मिन् 'वि एति' व्याप्नोति 'सः' 'देवः' द्योतनस्वभावः विज्ञानैकरसः परमेश्वरः । 'सः' 'नः' अस्मान् 'शुभया' 'बुद्ध्या' 'संयुनक्तु' संयोजयतु ॥ ४ ॥

यस्तावदुच्चावचानां वर्णानां निर्म्माता अवर्णोऽपि स ज्ञातात्मना-मात्मन्यवभासते । ते हि तं धर्म्मार्थानां प्रयोक्तारमित्यन्तरतमं मन्यन्ते । अकामाश्च निरुपाधिकया प्रीत्या पर्य्युपासते । तदा-गमहेतुं कल्याणीं बुद्धिमतीत्य न किमपि प्रार्थयन्ते च ॥ ४ ॥

१२१

स वृक्षकालाकृतिभिः परोऽन्यो-
यस्मात् प्रपञ्चः परिवर्त्ततेऽयम् ।
धर्म्मावहं पापनुदं भगेशं
ज्ञात्वात्मस्थममृतं विश्वधाम ।

विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा शिवꣳ शान्तिमत्यन्तमेति ॥ ५ ॥

'सः' परमेश्वरः 'वृक्षकालाकृतिभिः' वृक्षकालाकृतिभ्यः वृक्षात् संसारात् कालात् आकृतेश्च 'परः' 'अन्यः' प्रपञ्चासंस्पृष्टः 'यस्मात्' ईश्वरात् 'अयं' 'प्रपञ्चः' संसारः 'परिवर्त्तते ।' ज्ञात्वा तं 'धर्म्मावहं' धर्म्मस्याकरभूतं 'पापनुदं' पापस्य क्षयितारं 'भगेशं' भगस्य ऐश्वर्य्यस्य ईशं स्वामिनम् 'आत्मस्थं' सर्व्वेषामात्मनि स्थितम् 'अमृतम्' अमरणधर्म्माणं 'विश्वधाम' विश्वस्याधारभूतम् । 'ज्ञात्वा' च 'विश्वस्य एकं परिवेष्टितारं' 'शिवम्' 'एति' प्राप्नोति 'शान्तिम् अत्यन्तम्' । ५ ॥

ब्रह्म तावत् सर्व्वस्मात् कार्य्यभूतादन्यत् । न पुनस्तत् वहिर्विषयमिव वस्तुभूतं न वा मनोवत् आन्तरं किमपि । तद्धि विषयमनसोः कारणं । ताभ्यां स्वतन्त्रं परञ्च । स्वरूपतस्तत् खलु सत्यं ज्ञानमनन्तं च । न विद्यतेऽस्मिन् विसर्गजाते किमपि प्रतिरूपं तस्य । तत् खलु सर्व्वतःप्रकाशमाकाशमभिव्याप्य नियन्तृत्वेन सर्व्वमिदं कार्य्यकारणस्वभावं तमोमयीं पाशवीं प्रकृतिं च नियमयति धर्म्मावहत्वेन च मनुष्याणामात्मानमधिश्रित्य शुभां वुद्धिं च नियच्छति । पदार्थाः खल्वेते अज्ञानवशीकृताः पशवश्च नैसर्गिकनियममज्ञात्वा तद्वलेनैव नीयमाना विचेष्टन्ते मनुष्याणामात्मा पुनर्विवेकवलेन धर्म्मसमयमाकलय्य स्वातन्त्र्येण शुभान्यारभते । यदा ह्यसौ केनचित् असदभिनिवेशेन निघ्नीकृतः प्रशासितारं धर्म्मं विवेकबलं च व्युदस्य पापानि कुरुते तदैव ह्यनीशया दुर्म्मर्षणेन मृत्युपाशेन निवद्ध्यते महता च व्यलीकेन नितरां

ग्लानिमापाद्यते च। तदानीं तत् किल किल्बिषापहं ब्रह्मैव तस्य तावत् मन्दभाग्यस्य शरणं। यदा ह्यसौ पापभरभुग्नोऽन्तर्निगूढ़या तीव्रव्यथया नाहमीदृशमाचरिष्यामीत्यनुशोचन् तत् समभिपद्यते तदैव हि प्रपन्नार्त्तिहरेण तेन सर्व्वार्थप्रमाथिनः पापादुत्तार्य्य तदागमसाधनभूते पथि सन्धार्य्यते। अहो तस्यानुकम्पित्वं महत्त्वं च। इह हि विपज्जालजटिले पापपिच्छिले च संसारवर्त्मनि तत् शुद्धमपापविद्धमात्मनि समुपलभ्य तदेव हि कल्मषापहं विमुक्तेर्निदानं च ज्ञात्वा जीवः शान्तिमात्यन्तिकीं समुपैति ॥ ५ ॥

१२२

स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः
कालकालो गुणी सर्व्वविद्यः।
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः ॥ ६ ॥

'सः' परमेश्वरः 'विश्वकृत्' विश्वस्य कर्त्ता विश्वं वेत्तीति 'विश्ववित्' आत्मनां योनिरिति 'आत्मयोनिः' जानातीति 'ज्ञः' 'कालकालः' कालस्य कर्त्ता 'गुणी' विचित्रशक्तिमान् 'सर्व्ववित् यः'। 'प्रधानक्षेत्रज्ञपतिः' प्रधानं प्रपञ्चः 'क्षेत्रज्ञो' विज्ञानात्मा तयोश्च पालयिता 'गुणेशः' गुणानामीशः 'संसारमोक्षस्थितिबन्धहेतुः' संसारमोक्षस्थितिबन्धानां हेतुः कारणम् ॥ ६ ॥

ईश्वरस्तावत् सर्व्वेषां स्रष्टा पाता बन्धुरीशिता च। कोऽपि न तच्छासनमत्येति। तद्विधानादेव विज्ञानात्मा सङ्घातेमिम-

मनुप्रविश्य ज्ञानेन धर्म्मसम्पदा च स्ववशमापन्नो निःश्रेयसाय यतते । अथ तत्प्रसादादेव च तमधिगम्य दुष्पारं संसारसागरं व्यतितरिष्यति ॥ ६ ॥

१२३

सतन्मयोह्यमृतईशसंस्थो-
ज्ञः सर्व्वगोभुवनस्यास्य गोप्ता
यईशेऽस्य जगतोनित्यमेव
नान्योहेतुर्व्विद्यतईशनाय ।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्व्वै शरणमहं प्रपद्ये ॥ ७ ॥

'सः' परमेश्वरः 'तन्मयः', चैतन्यज्योतिर्म्मयः 'हि' 'अमृतः' अमरणधर्म्मा ईशश्चासौ संस्थश्चेति 'ईशसंस्थः' ईशः स्वामी सम्यक् स्थितिर्यस्यासौ संस्थः । जानातीति 'ज्ञः' सर्व्वंच गच्छतीति 'सर्व्वगः' 'अस्य' भुवनस्य 'गोप्ता' पालयिता । 'यः' 'ईशे' ईष्टे 'अस्य जगतः' 'नित्यम् एव' नियमेन 'न अन्यः हेतुः विद्यते' 'ईशनाय' शासनाय । 'तं' 'ह' हशब्दोऽवधारणे 'देवं' परमेश्वरं आत्मनि या बुद्धिः तां प्रकाशयतीति 'आत्मबुद्धिप्रकाशं' 'मुमुक्षुः' 'वै' 'अहं' 'शरणं' 'प्रपद्ये' प्रयामि ॥ ७ ॥

स खलु सर्व्वेषामीशिताऽस्माकं मनसि धर्म्मबुद्धिं विवेकबलं च नियच्छति । यथा हि कश्चित् भूमिपतिः स्वायत्तसिद्धिसु प्रकृतिसु स्वशासनं विघोषयति तथैव स खलु धर्म्मावहो मनुष्याणां स्ववशीकृतेष्वात्मषु धर्मविधिं प्रवर्त्तयति । वयं पुनर्मनीषया विवेकबलेन च तेषु चिराय निहितं तमेव विचारयामः ।

सम्भवामश्च विध्यनुगुणं किमपि प्रकुर्व्वाणाः शीलसौजन्यादिभिर्भगवत्प्रियाः। अहो सुचीर्णेन धर्म्मेण पूते मनसि प्रसादः प्रतितिष्ठते। तेनैवात्यन्तिको दुःखनिवृत्तिर्भवति। वयं तावत् धर्म्मव्यतिपातभयात् व्युदस्य हृदयश्रितं विषमं संकल्पशतं यावतिथं मात्मप्रसादं निर्विशामः यावता च पुण्यप्रभावेणात्मानं पुनीमहे तावदेव तस्मिन्नपापविद्धे शुद्धे ब्रह्मण्यस्माकं रागः परिवर्द्धते। वयमपि तदधिगन्तुं मृत्योः प्रतीकाशं संसारपाशमुच्छेतुं च तच्छरणमन्विच्छामः॥ ७॥

१२४

तस्य ह वा एतस्य ब्रह्मणोनाम सत्यम्।
निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥ ८॥

'तस्य ह वै एतस्य ब्रह्मणः' 'नाम' अभिधानं 'सत्यम्'। ब्रह्मणः स्वरूपं दर्शयति। 'निष्कलं' कला अवयवा निर्गता यस्मात् तत् निरवयवं 'निष्क्रियम्' अपि स्वयं नियमेन सर्व्वं जगत् प्रशास्ति 'शान्तम्' उपसंहृतसर्व्वविकारं 'निरवद्यम्' अगर्हनीयं 'निरञ्जनं' निर्लेपम्। 'अमृतस्य' मोक्षस्य प्राप्तये 'परं सेतुं' संसारमहोदधेरुत्तरणोपायत्वात्। 'दग्धेन्धनम्' 'अनलम्' 'इव' देदीप्यमानम्॥ ८॥

यत् पुनरस्माकं दूरे अन्तिके च तिष्ठति तस्य खलु व्यापकस्वभावस्य ब्रह्मणो नाम सत्यमिति। स्वरूपतोऽपि तत् सत्यं। तत्सत्यतामुपाश्रित्य सर्व्वे पदार्थाः सञ्जायन्ते। तदेव सत्यस्य सत्यं प्राणानां प्राणश्चेतनस्य चेतनं आत्मनो मूलं च।

ईश्वरस्तावत् अद्वितीयश्चिदेकरसश्च । नास्ति तस्य कोऽप्यवयवः । स किल केनापि न परिच्छिद्यते । स हि सर्व्वशक्तिरपरिवृत्तिसहैः शुभावहैर्नियमनिवहैः सर्व्वमिदं चराचरमनुशास्ति । सर्व्वज्ञेन तेन विश्वचक्ररिरचया यस्मिन् पुनर्यत् कर्म्म समुपन्यस्तं स खलु सर्व्वथा तदनुतिष्ठति । सोऽपि सर्व्वेश्वरस्तेषां नियामकत्वेन सर्व्वत्र वर्त्तते । अहो तस्यैव नियमसूत्रेण सितो विवस्वान यथाकालं समुदेति मेघोवर्षति वृक्षः फलानि सूते च । स्ववशमापन्नोऽयं मनुष्योऽप्यवगीते वर्त्मन्यवगाहमानस्तच्छासनादेव धर्म्मदण्डं वहन् पश्चात्तापेन युज्यते । अथ तमेव शरणमभिप्रपन्नः पापात् विमुक्तः पुण्यप्रसाधनफलमात्मप्रसादमुपागतश्च छित्त्वा दुरुच्छेद्यं संसारपाशं चिराय सुखोदर्कपरिणामं भजते । ईश्वरस्तावत् निष्क्रियः शान्तश्च । तत्सङ्कल्पादेव सर्व्वाण्येतानि समुपजातानि । तेषां पुनर्लब्धसत्ताकानां तदिच्छयैव संहतानां च केचन ज्ञानात् कति वा अज्ञानात् तदर्थं साधयन्ति । अहो स तावत् प्रवर्त्तकोऽपि संसारस्य न तेन संसज्यते । नापि तत्कर्म्मणा निवध्यते च । स खलु निरञ्जनोऽसङ्गो निरवद्यः पूर्णश्च । तमसत्यधर्म्मिणमभिप्रपद्य न कोऽपि मृत्योर्विभेति । सएव खल्वमृतस्य सेतुः । यस्तावत् विज्ञानप्रकाशे तमनुसन्धत्ते सएव तत्र दग्धेन्धनमनलमिव भान्तमनुपश्यति ॥ ८ ॥

१२५

ससेतुर्व्विधृतिरेषां लोकानामसम्भेदाय । नैनꣳ सेतुमहोरात्रे तरतः न जरा न मृत्युर्न शोकः ॥ ९ ॥

'सः' ब्रह्मात्मा सेतुरिव 'सेतुः' 'विधृतिः' विधरणः अनेन हि सर्व्वं जगत् विधृतम्। अध्रियमानं ह्येवमेतदीदं विश्वं विनश्येत यतस्तस्मात् ससेतुर्व्विधृतिः। 'एषां' भूरादीनां 'लोकानाम्' असम्भेदाय' अविदारणाय अविनाशायेत्येतत्। 'न एनं सेतुं' ब्रह्मात्मानम् 'अहोरात्रे' सर्व्वस्य जनिमतः परिच्छेदके 'तरतः'। यथा अन्ये संसारिणः कालेन अहोरात्रादिलक्षणेन परिच्छेद्याः न तथा अयं कालपरिच्छेद्यः। एवं 'न' 'जरा' तरति प्राप्नोति तथा 'न' 'मृत्युः' 'न' तु 'शोकः' ॥ ६ ॥

सर्व्वमिदं निरधिष्ठानं विशीर्य्येत द्रुतीश्वरेण तत् सन्धार्य्यते। स खलु नित्यस्वरूपत्वात् कालेन न परिच्छेत्तुं शक्यते। अविकार्य्यत्वात् च जरामरणशोकैर्नापि परिभूयते। स किल कालकृत् दण्डमुहूर्त्ताद्यवयवोपेतं कालं नियमयति। तस्मादेव हि कालस्तमतिवर्त्तितुं न क्षमते। अहो यमभिप्रपन्नाः सर्व्वेऽपि जरामरणादिभ्यः प्रमुच्यन्ते न जाने विकारास्ते कथं तमधिकुर्य्युः ॥ ९ ॥

१२६

य आत्माऽपहतपाप्मा विजरोविमृत्युर्व्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः। सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति॥ १० ॥

'यः' 'आत्मा' ब्रह्मात्मा 'अपहतपाप्मा' 'विजरः विमृत्युः विशोकः' 'विजिघत्सः' जिघत्सा अत्तुमिच्छा तद्रहितः 'अपिपासः' पिपासावर्ज्जितः 'सत्यकामः सत्यसंकल्पः'। 'सः अन्वेष्टव्यः सः विजिज्ञासितव्यः'। किं

तस्यान्वेषणात् विजिज्ञासनाच्च स्यात् इत्युच्यते 'सः' 'सर्व्वान् च लोकान् आप्नोति' 'सर्व्वान् च कामान्' 'यः तम्' 'आत्मानं' ब्रह्मात्मानम् 'अनुविद्य' अन्विष्य 'विजानाति' ॥ १० ॥

अहो भाग्यं यदज्ञानोपहताः पापरता अपूर्णा अपि वयं तं ज्ञानघनमपापं पूर्णस्वरूपं जानीमहे। सर्व्वथा प्रयत्नवता तत्परायणेनैव स विज्ञेयः। यथा हि केनचित् तृषातुरेण तोयमन्विष्यते तथा सतृष्णेन चेतसा सोऽन्वेष्टव्यः। यथा किल करतलोपनीते चिन्ताफले न कोऽपि विकल्पते तथैव निर्विकल्पया बुद्ध्या ज्ञानपरिपाकेण च नित्यमेव सन्निहितोऽयं बोद्धव्यः। यः खलु निगृहीतेन मनसा विविच्य ज्योतिर्म्मये आत्मनि तं विश्वबीजं पुरुषं प्राणानां प्राणः आत्मनोऽप्यवभासकमित्युपलभते स पुनस्तृषित इव तोयेन नितरां तृप्यति। निराशीर्भवति। विन्दते च भूरादीनां लोकानां सुखं। ब्रह्मानन्देन वितृप्तश्च भुङ्क्ते तदन्तरङ्गभूतान् अन्यानप्यानन्दसन्दोहान् ॥ १० ॥

१२७

आकाशोवै नाम नामरूपयोर्निर्व्वहिता।
ते यदन्तरा तद्ब्रह्म तदमृतम् ॥ ११ ॥

'आकाशः वै' ब्रह्मणः 'नाम' अभिधानम् आकाशइवाशरीरत्वात् सूक्ष्मत्वाच्च सः परमात्मा आकाशाख्यः। 'नामरूपयोः निर्व्वहिता' निर्व्वोढ़ा 'ते' नामरूपे 'यदन्तरा' यस्य अन्तरा विलक्षणे 'तत् ब्रह्म' यदि तद्ब्रह्म नामरूपाभ्यां विलक्षणं अस्पृष्टं तथापि तयोर्निर्व्वोढ़ा। 'तत् अमृतम्' ॥११॥

भगवतोऽनन्तत्वं मनसा यत् गृह्यते तदुदीरणाय वागियं नाम्ना स आकाश इति प्रवर्त्तते । अहो सर्व्वमिदं येन व्याप्तं विधृतञ्च न तस्मिन नामरूपे सम्भवतः ॥ ११ ॥

१२८

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

'न एव वाचा न मनसा' 'न चक्षुषा' नान्यैरपि इन्द्रियैः 'प्राप्तुं शक्यः' शक्यते केनचित् । तस्मात् 'अस्ति इति ब्रुवतः' अस्तिवादिनः आगमार्थानुसारिणः श्रद्दधानात् 'अन्यत्र' नास्तिकवादिनि नास्ति जगतीमूलं ब्रह्म निरन्वयमेवेदं कार्य्यमिति मन्यमाने विपरीतदर्शिनि 'कथं' 'तत्' ब्रह्म 'उपलभ्यते' न कथञ्चन उपलभ्यते ॥ १२ ॥

ईश्वरः खल्वनिर्वर्ण्योऽचिन्त्योऽनिर्वाच्यश्च । न स किल चक्षुषा मनसा वाचा च परिगृह्यते । आत्मप्रत्ययएव तदधिगमे प्रमाणं । वयं तावत् परिच्छिन्नधर्म्माणः स्वातन्त्र्यहीनाश्च । अयमेवास्माकमभावप्रत्ययो नियमेन कमपि प्रतियोगिनमपेक्षते । अन्यथा स हि निरन्वयः प्रभज्येत । तत्सत्तया च तत्प्रतियोगिनः कस्यचित् प्रतीतिः सर्व्वेषां स्वाभाविकी प्रमाणान्तरानिरपेक्षा च । अपि चेत् भवता आत्मप्रत्ययप्रामाण्यं नाङ्गीक्रियेत तर्हि प्रमेयप्रतिपत्तये तर्कोपपत्तिप्रसरो दुर्णिवारः । अथ सुपरामृष्टेनापि विचारचातुर्य्येण निश्चीयते वाङ्मनसोरगोचरो विज्ञानप्रकाश्यः स्वतन्त्रः पूर्णश्च कोऽप्यस्तीति । यतः स खल्वस्माकं विविक्ते ज्ञाने यदैव प्रतिभासते तदा वय-

मात्मप्रत्ययप्रामाण्येनैव तस्यास्तित्वमुपलभामहे । अहो विकल्पाकुलीकृतेऽवधीरिते च तस्मिन् सहजे प्रत्यये सर्व्वान्धत्वं प्रसज्येत । सर्व्वप्रमितिमूलमप्यवसादमापद्येत । आत्मनो वहिर्विषयस्य कार्य्यस्य (नियततत्पूर्व्ववर्त्तिनः) कारणस्य च सत्तायां संशयकवलितेयं प्रज्ञापि प्रभ्रश्येत । किं बहुना यो नावगाहते खल्वात्मप्रत्ययप्रामाण्यं पूर्णत्वादिविशेषणकमीश्वरं प्रति न तस्य प्रमावुद्धिरुत्पद्यते । स ह्यप्रतिष्ठानतर्कावष्टम्भेन भगवत्सङ्गसमुत्थां शान्तिं नाधिगच्छति । अतः सर्व्वथा आत्मप्रत्यय एव तदधिगमे प्रमाणं ॥ १२ ॥

१२९

यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततोविजुगुप्सते ॥ १३ ॥

'यदा' यस्मिन् काले 'एतम्' 'आत्मानं' ब्रह्मात्मानं 'देवं' द्योतनवन्तं 'ईशानम्' ईशितारं 'भूतभव्यस्य' कालत्रयस्य 'अञ्जसा' साक्षात् 'अनुपश्यति' तदा 'ततः' तस्मादीशानात् देवात् स्वकीयात्मानं 'न' 'विजुगुप्सते' विशेषेण जुगुप्सते गोपायितुमिच्छति ॥ १३ ॥

पापाः खल्वात्मानं प्रच्छादयितुं प्रयतन्ते । सम्भाव्यते वा तदन्यस्मात् न पुनः सर्व्वसाक्षिणः सर्व्वान्तर्यामिस्वरूपात् भगवतः । यः खलु भूतभव्यस्येशितारं स्वप्रकाशं ज्योतिर्म्मयं च पुरुषं करतलन्यस्तमामलकमिव निर्विकल्पं संप्रतिपद्यते न स तावत् कश्मलमधिगच्छति नापि तस्मादात्मानं निगूहितुमिच्छति । अथ चेत् अज्ञानान्धतमस निम्नीकृतः केनचित् विकारहेतुना कदापि

व्याहन्येत तदानीमपि तस्मात् नात्मानं विजुगुप्सते। अपि-त्वत्युल्वणेनानुतापेन दन्दह्यमानः प्रत्यूहोपशान्तये यतते। तदानीं स खलु कृपालुरीश्वरोऽपि तमतिकृपणं पापोपशमं च प्रार्थयमानं सर्व्वथा परिरक्षति॥ १२॥

---

## पञ्चदशोऽध्यायः।

१३०

नाविरतोदुश्चरितान्नाशान्तोनासमाहितः।
नाशान्तमानसोवापि प्रज्ञानेनैनमाप्नुयात्॥ १॥

'न' 'दुश्चरितात्' पापकर्म्मणः 'अविरतः' अनुपरतः 'न' अपि इन्द्रियलौल्यात् 'अशान्तः' 'न' अपि 'असमाहितः' अनेकाग्रमनाः विक्षिप्तचित्तः। 'न वा अपि' 'अशान्तमानसः' कर्म्मफलार्थित्वात् केवलं 'प्रज्ञानेन' 'एनं' ब्रह्मात्मानम् 'आप्नुयात्'। यस्तु दुश्चरितात् विरतः इन्द्रियलौल्याच्च समाहितचित्तः कर्म्मफलादप्युपशान्तमानसश्चाचार्य्यवान् सः प्रज्ञानेन परं ब्रह्म प्राप्नोति॥ १॥

ज्ञातं मया परप्रेमास्पदं ब्रह्म न पुनस्तस्मिन् समाहितेन चेतसा योगानन्दः समासादितः। विदितमेव मया तत् खलु निराविलं महच्च न पुनस्तन्निष्ठैस्तत्तत्धर्म्मैश्चारित्र्यवैश्वर्य्यसधि-गच्छता तत्सायुज्यावाप्तये यत्नः समास्थितः। अहो तस्मिन्नेवा-स्माकं जन्मादिहेतुत्वेन परिज्ञायमानेऽपि न पुनस्तदुदीर्णे पावने

पथि पदैकमपि प्रसर्पितं । धिङ्मामधन्यं । पुत्राद्येषणया मुधै-
वाहं कालं चपयामि । कुतो मे ब्रह्मोपलम्भः ॥ १ ॥

१३१

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः। तयोः श्रेयआददानस्य साधु भवति हीयते ऽर्थात् यउ प्रेयोवृणीते ॥ २ ॥

'श्रेयः' निःश्रेयसं 'च' 'प्रेयः' प्रियतरं 'च' 'मनुष्यम्' 'एतः' प्राप्नुतः । 'तौ' श्रेयःप्रेयःपदार्थौ 'संपरीत्य' सम्यक् परिगम्य सम्यङ्-मनसालोच्य गुरुलाघवं 'विविनक्ति' पृथक् करोति 'धीरः' धीमान् । विविच्य च 'तयोः' 'श्रेयः' 'आददानस्य' उपादानं कुर्व्वतः 'साधु' शोभनं शिवं 'भवति'। 'यः उ' यस्तु 'प्रेयः' 'वृणीते' उपादत्ते सोऽदूरदर्शी विमूढः 'हीयते' वियुज्यते 'अर्थात्' पुरुषार्थात् पारमार्थिकात् प्रयो-जनात् नित्यात् ॥ २ ॥

इह हि द्विविधो मार्गः। एकस्तावत् गमयति ब्रह्म परस्य पराक्सुखं। अथ येनोपाश्रितेन ब्रह्म समधिगम्यते तस्यैवोपादानं श्रेयः । येनोपलभ्यतेऽज्ञानोपच्छिन्नं पराक्सुखं तदालम्बनं च प्रेयः । द्वावप्येतौ श्रेयःप्रेयःपदार्थौ पर्य्यायेण मनुष्यमधि-कुरुतः। येन खलु श्रेय उपादीयते ध्रुवफलं कल्याणं हि तस्य। यश्च निषेवतेऽप्रशस्तं प्रेयः न स तावत् ब्रह्मानन्दमधिगच्छति। किञ्च यः खलु सुभगोऽनन्यभागीश्वरं भजते सर्व्वथा प्रीणयति च प्रिय-तमं तमेव स हि तदोहितमिति सर्व्वार्थं साधयति। यस्तावत्

अविवेकवशात् सज्जते संसारवर्त्मनि स खलु तत्सुखोपचयार्थमेव तं मङ्गलैकनिलयमुपास्ते । न तेन विषयदुर्म्मदेन कामपरीतचेतसा साटोपमेवमभिधातुं शक्यते ब्रह्मन् तत्प्रीतये श्रेयसे च लोकानामहं गृह्यं धर्म्ममनुवर्त्तये इति । अहो त्वमपि यदैव अभिधास्यसि यदा च ते प्रारम्भाः भगवत्प्रीतये लोकहिताय च प्रवर्त्तेरन् तदैव ज्ञास्यसि सुनिषेवितं श्रेय इति ॥ २ ॥

१३२

**यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति पापकारी पापोभवति । पुण्यः पुण्येन कर्म्मणा भवति पापः पापेन ॥ ३ ॥**

यथा कर्त्तुं यथा चरितुं शीलमस्य सोऽयं मनुष्यः 'यथाकारी यथाचारी' सः 'तथा भवति' । 'साधुकारी साधुः भवति पापकारी पापः भवति' । 'पुण्यः पुण्येन कर्म्मणा भवति पापः पापेन' ॥३॥

पापसङ्कल्पं परिहाय प्रसाध्य च पुण्यं ब्रह्मोपलब्धये सर्व्वथा प्रयतेत ॥ ३ ॥

१३३

**यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।**
**तस्येन्द्रियाण्यवश्यानि दुष्टाश्वाइव सारथेः ॥ ४ ॥**

'यः तु' 'अविज्ञानवान्' अविवेकी 'भवति' 'अयुक्तेन' अप्रगृहीतेन 'मनसा सदा' युक्तोभवति । 'तस्य' अकुशलस्य 'इन्द्रियाणि' 'अवश्यानि' अशक्यनिवारणानि 'दुष्टाश्वाः' अदान्ताश्वाः 'इव' 'सारथेः' भवन्ति ॥ ४ ॥

यस्य तावत् मनो न धृतिपरिकलितं सएवाधन्यः श्रेयःसाधनात् धर्म्मात् प्रमाद्यति । विषमं प्रापितश्च कण्टकनिचिते पापवर्त्मनि विचेष्टते। अतस्तद्यथा बुद्ध्या वशीकृतं धर्म्मशासनं नातिवर्त्तेत तत्र सर्व्वैरपि यत्न आस्थेयः ॥ ४ ॥

१३४

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वाइव सारथेः ॥ ५ ॥

'यः' 'तु' पुनः पूर्व्वोक्तविपरीतः 'भवति' 'विज्ञानवान्' विवेकवान् 'युक्तेन मनसा' प्रगृहीतमनाः 'सदा' 'तस्य इन्द्रियाणि' 'वश्यानि' प्रवर्त्तयितुं निवर्त्तयितुं वा शक्यानि 'सदश्वाः इव सारथेः' ॥ ५ ॥

यस्येन्द्रियाणि बुद्ध्या प्रतिष्ठितानि स तैरनवद्ये धर्म्मे पथि कल्याणे च निविश्यते ॥ ५ ॥

१३५

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत् पदमाप्नोति संसारञ्चाधिगच्छति ॥ ६ ॥

'यः तु अविज्ञानवान् भवति' 'अमनस्कः' अप्रगृहीतमनस्कः सततएव 'सदा अशुचिः'। 'न सः' 'तत्' ब्रह्म यत् परं 'पदं आप्नोति संसारं च अधिगच्छति' ॥ ६ ॥

यस्य खलु विमलं ब्रह्मस्वरूपमविदितमेवास्ते न तेन शक्यते दुर्निग्रहं मनो निग्रहीतुं । स हि पापं चिन्तयते ब्रवीति

कुरुते च। स च कश्मलोपहतप्रभावः कूटकपटकर्पटीपरिवृतायां भवाटव्यामटाय्यमानस्तत् प्रपञ्चोपशमं ब्रह्म नाधिगच्छति ॥ ६ ॥

१३६

**यस्तु विज्ञानवान भवति समनस्कः सदा शुचिः।**
**सतु तत्पदमाप्नोति यस्मात् भूयोन जायते॥ ७॥**

'यः तु विज्ञानवान् भवति' 'समनस्कः युक्तमनाः 'सदा शुचिः'। 'सः तु तत्पदं आप्नोति' 'यस्मात्' आप्तात् पदात् प्रच्युतः सन् 'भूयः' पुनः 'न जायते' संसारे॥ ७॥

यस्तावत् धर्म्मेणात्मानं पुनीते सुहृदिव धर्म्मस्तमपुनरावृत्तये पुण्यं लोकं नयति। शुभोदर्कपरिणामञ्च प्रापयति ॥ ७ ॥

१३७

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ८ ॥**

'यः तु' 'विज्ञानसारथिः' विज्ञानं सारथिर्यस्येति 'मनःप्रग्रहवान्' प्रगृहीतमनाः 'नरः' विद्वान् । 'सः' 'अध्वनः' संसारगतेः 'पारं' परमेवाधिगन्तव्यम् 'आप्नोति' 'तत्' 'विष्णोः' व्यापनशीलस्य ब्रह्मणः परमात्मनः 'परमं' प्रकृष्टं 'पदं' स्थानम् ॥ ८ ॥

यस्य खलु चित्तं ज्ञानेन धर्म्मेण च प्रोद्भासितं स हि मोहगहनात् संसारात् तीर्णः सर्व्वगतं ब्रह्म संप्रतिपद्यते ॥ ८ ॥

१३८

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततं ॥ ९ ॥**

'तत्' 'विष्णोः' व्यापनशीलस्य ब्रह्मणः 'परमं' उत्कृष्टं 'पदं' स्थानं 'सदा' सर्व्वदा 'पश्यन्ति' 'सूरयः' ब्रह्मविदः। 'दिवि' आकाशे 'इव' यथा 'आततं' विस्तृतं वस्तुजातं 'चक्षुः' विरोधाभावेन विशदं पश्यति ॥ ९ ॥

एकाग्रमनसोधीरास्तावत् व्याकोषितेन चक्षुषा दिवि व्याततं रूपमिव स्वप्रकाशं ब्रह्म ज्ञानप्रसादेन पूते आत्मनि संपरिपश्यन्ति। अतोऽयमात्मा खलु कोषइव व्यापकस्वरूपस्य तस्य प्रकृष्टं पदमिति मुमुक्षवो व्याचक्षते ॥ ९ ॥

१३९

**अनन्दानाम ते लोकाअन्धेन तमसावृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽवुधोजनाः ॥१०॥**

'अनन्दाः' अनानन्दाः असुखाः 'नाम ते लोकाः' 'अन्धेन' अदर्शनलक्षणेन 'तमसा आवृताः' तमसा अज्ञानेन आवृताः व्याप्ताः। 'तान्' लोकान् 'ते' 'प्रेत्य' मृत्वा 'अभिगच्छन्ति' अभियन्ति। के ये 'अविद्वांसः' ब्रह्मावगमवर्ज्जिताः 'अवुधाः' अवुधाः दुर्बुद्धयोऽयुक्तमनसः 'जनाः' ॥ १० ॥

योह्यस्मिन्नेव जन्मनि परिमृद्य ज्ञानधर्म्मौ ब्रह्मानन्दं समधिगन्तुं न यतते स खलु दशान्तमुपागतः स्थास्यति दूरात्

सुदूरमानन्दमयात् पुण्यलोकात्। यः कश्चित् यत्रकुत्रचित् लोके समुपचितेन ज्ञानेन प्रसाधितेन च धर्म्मेण यावतिथं ब्रह्मानन्दमनुभवेत् तस्य तावत् तदनुगुणैव गतिर्भवति। तस्मादिहस्थितेनैव सर्व्वथा योगयुक्तेन भाव्यं। नान्यः पन्था विद्यते पुण्यलोकं समधिगन्तुं ॥ १० ॥

---

## षोड़शोऽध्यायः।

१४०

शान्तोदान्तउपरतस्तितिक्षुः समाहितोभूत्वा आत्मन्येवात्मानं पश्यति ॥ १ ॥

'शान्तः' इन्द्रियलौल्यात् उपशान्तः 'दान्तः' युक्तमनाः 'उपरतः' विनिर्म्मुक्तः 'तितिक्षुः' द्वन्द्वसहिष्णु एकाग्ररूपेण 'समाहितः भूत्वा' 'आत्मनि' जीवात्मनि 'एव' 'आत्मानं' परमात्मानं स्वयम्भुवं 'पश्यति' ब्रह्मवित् ॥ १ ॥

इह हि द्वे किल पर्य्यायेण मनुष्यमुपतिष्ठतः विषयैषणा ब्रह्मप्रतिपित्सा चेति। यावदेवापचीयते मनसा सम्परिष्वक्तो विषयस्नेहस्तावदेवोपचीयते त्यागानुगो हि ब्रह्मानुरागः। अथ तदा अस्माकं प्रज्ञानं कार्त्स्न्येन तत् ज्ञानघनमनुसन्धत्ते संपरिपश्यति च सर्व्वतः प्रवृत्तिमत् तद्रूपं। किञ्च ब्रह्मज्ञस्तावत् सुप्रसन्नेन ज्ञानेन पूतस्तत् कारणमात्मन्येव समधिगच्छति रसयति च कृतकृत्योऽतिविमलं तदानन्दसन्दोहं।

अहो पूर्णस्वरूपं ब्रह्म नास्माकं दूरे अपि तु विज्ञानात्मनि तदवभासकतया नित्यमेव विद्योतते । सर्व्वे लोकाः सर्व्वे जीवाः सर्व्वाणि च भूतानि तस्मिन्नेव प्रतितिष्ठन्ति । यस्य खलु ज्ञानं वलीयसा मोहेनापहृतं सएव मन्यते दविष्ठं हि तत् । यस्तु ज्ञानप्रसादेन शमदमादिसाधनसम्पत्त्या च सम्भाविताधिकारः स एव आत्मनि तत् विभ्राजमानं समनुपश्यति ॥ १ ॥

१४१

नैनं पाप्मा तरति सर्व्वं पाप्मानं तरति नैनं पाप्मा तपति सर्व्वं पाप्मानं तपति । विपापोविरजोऽविचिकित्सो-ब्राह्मणोभवति ॥ २ ॥

'न' 'एनं' साधकं 'पाप्मा' पापः 'तरति' प्राप्नोति अयन्तु 'सर्व्वं पाप्मानं' 'तरति' अतिक्रामति । 'न' च 'एनं पाप्मा' 'तपति' तापयति अयं 'सर्व्वं' 'पाप्मानं' 'तपति' तापयति । सः 'विपापः' विगतपापः 'विरजः' विगतचित्तमलः 'अविचिकित्सः' करतलन्यस्तामलकवत् अस्ति ब्रह्मेति निश्चितमतिः 'ब्राह्मणः' भवति ॥ २ ॥

यस्य पुनर्विज्ञानं ब्रह्मणि स्थिरं यस्तावत् तत्समधिगन्तुं दुश्चरं च तपश्चरति न स खलु पापेन परामृष्यते । पुण्य-परिपाकफलेन च ब्रह्मवित् ब्राह्मणो भवति ॥ २ ॥

१४२

समोदते मोदनीयꣳहि लब्ध्वा । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्योविमुक्तोऽमृतोभवति ॥ ३ ॥

'सः' विद्वान् 'मोदते' 'मोदनीयं' हर्षणीयं ब्रह्म 'हि लब्ध्वा'। 'तरति शोकं' मानसं सन्तापं व्यतिक्रान्तोभवति 'तरति' 'पाप्मानम्'। 'गुहाग्रन्थिभ्यः' हृदयाज्ञानमोहग्रन्थिभ्यः 'विमुक्तः' सन् 'अमृतः भवति' ॥३॥

अहो हृदयोन्मादनीयं सर्व्वेषां च वरिष्ठं ब्रह्म समुपलभ्य तद्गतप्राणेन तद्विदा किमपि लोकातिगं सुखमधिगम्यते। यस्तावत् विज्ञानप्रकाशेन ब्रह्म समधिगच्छति स हि तदीहयैव सर्व्वार्थान् साधयति। सोऽयं तदुदीर्णे धर्म्मे वर्त्मन्यवगाहमानः कर्म्मफलमनीहमानश्च तस्यैव प्रियं समाहर्त्तुं यतते। किं बहुना स खल्वनेनैव कर्म्मयोगेन भवाम्भोधेर्मोहावर्त्तेभ्यः शोकोपतापपापेभ्यश्च विमुक्तः परे पुराणे ब्रह्मणि नित्यसंस्थां लभते ॥३॥

१४३

## सत्यान्न प्रमदितव्यं धर्म्मान्न प्रमदितव्यं कुशलान्न प्रमदितव्यम् ॥ ४ ॥

'सत्यात्' 'न' 'प्रमदितव्यं' विच्छेत्तव्यं अनृतं न वक्तव्यं 'धर्म्मात् न प्रमदितव्यं' 'कुशलात्' मङ्गलयुक्तात् कर्म्मणः 'न प्रमदितव्यम्' ॥ ४ ॥

वचसि लोकव्यवहारे च सर्व्वथा सत्यानुसन्धानं तावत् जीवितसर्व्वस्वं धर्म्मा[illegible]त्तानां। तस्मादेव ब्रह्मप्रतिपित्सुना सत्यं न हातव्यं। ब्रह्मसंस्थो हि सद्भावेनानुप्राणितः सर्व्वथा भागवतं धर्म्मं निषेवेत। तेन किल सुचीर्णेन मनः पूयते ब्रह्म प्रसीदति तदवगमकारणं विज्ञानमप्यासाद्यते च। अतो मुमुक्षुणा धर्म्मो न हातव्यः। अपि चेत् त्वं ब्रह्मणो मङ्गलस्वरू-

फलमुररीकर्त्तुं समीहसे तर्हि तत्सङ्कल्पसायुज्यं जुषमाणस्तदादिष्टं लोकहितं समाचर। अन्यथा कथमपि तत्र कृतार्थतामधिगन्तुं न प्रभविष्यसि। अतः शुभं कर्म्म न हातव्यं ॥ ४ ॥

१४४

सत्यं वद। समूलोवा एषपरिशुष्यति योऽनृतमभिवदति ॥ ५ ॥

'सत्यं' सत्यवचनं 'वद'। 'समूलः' सह मूलेन 'वै' 'एष परिशुष्यति' शोषमुपैति 'यः' 'अनृतम्' अयथाभूतार्थम् 'अभिवदति' ॥ ५ ॥

सत्यं हि ब्रह्म। तत्रैव धर्म्मः प्रतिष्ठितः। अतः सुवृत्तेन ब्रह्मज्ञेन सदा सत्यव्रतेन भाव्यं। स खलु सत्यं ब्रूयात् सत्यं समाचरेत् च ॥ ५ ॥

म

१४५

धर्म्मं चर। धर्म्मात् परं नास्ति। धर्म्मः सर्व्वेषां भूतानां मधु ॥ ६ ॥

'धर्म्मं' 'चर' आचर। 'धर्म्मात् परं नास्ति' धर्म्मेण हि सर्व्वं नियम्यन्ते। 'धर्म्मः' सर्व्वेषां नियन्ता [illegible] ॥ [illegible]ीयमानरूपस्य 'सर्व्वेषां भूतानाम्' उपकारकत्वेन 'मधु' ॥ ६ ॥

उपादेयानां कर्म्मणामाचरणं हि धर्म्मः। यदात्मनि गुरौ पुत्रे कलत्रे चान्वाहार्य्यं यच्च बहुमते भर्त्तरि प्रतिवेशवास्तव्ये दुर्गते स्वविषयवासमुपागते धातरि च संविधेयं

तन्निर्वहणं हि धर्म्मः। विचार्य्य देशकालादीन् यत्यदस्माभिः कार्य्यं स खलु सर्व्वेश्वरस्तत्तत्परामर्षपुरःसरमेव तत्रतत्रा-प्यन्तर्यामिरूपतया अनुक्षणमस्मान् नोदयति। वयन्तु तेनानु-शिष्टाः सत्ये धर्म्मे कल्याणे च प्रतितिष्ठिताः भयस्थानेऽपि निर्भीकाइव वर्त्तामहे ॥ ६ ॥

१४६

## श्रद्धया देयम् अश्रद्धया अदेयम् ॥ ७ ॥

यत्किञ्चित् देयं तत् 'श्रद्धया' एव 'देयं' दातव्यम्। 'अश्रद्धया अदेयम्' । ७ ॥

श्रद्धया देयं न पुनः कदाचित् क्लीवतया ॥ ७ ॥

१४७

## मातृदेवोभव पितृदेवोभव आचार्य्यदेवोभव ॥ ८ ॥

माता देवोयस्य सः मातृदेवः त्वं 'मातृदेवः' 'भव'। एवं 'पितृदेवः भव' 'आचार्य्यदेवः भव' ॥ ८ ॥

इह खलु प्रित[illegible]ङ्गलस्वरूपप्रतिरूपाविवावतिष्ठ-माने प्रीतिस्नि[illegible] नित्यमस्मान प्रतीक्षेते। वेदवित् गुरुरपि ज्ञानप्रदीपेनातिघोरमज्ञानतिमिरं व्युदस्य ब्रह्म गम-यति। अतस्तेषां तत्तत् कृत्यं बहु मन्यमानैः सर्व्वैरप्यस्माभि-र्भक्तिप्रह्वैर्भवितव्यं ॥ ८ ॥

१४८

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि नो इतराणि ॥ ९ ॥

'यानि' 'अनवद्यानि' अनिन्दितानि 'कर्म्माणि तानि सेवितव्यानि' त्वया । 'नो' 'इतराणि' निन्दितानि कर्त्तव्यानि ॥ ९ ॥

मङ्गलैकनिलयस्य धातुः शुभं समीहितमनुहरमानेन श्रेयस्कामेन च सता शुभं समाचरणीयं न पुनरशुभं ॥ ९ ॥

१४९

यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि नो इतराणि ॥ १० ॥

'यानि' 'अस्माकम्' आचार्य्याणां 'सुचरितानि' शोभनानि आचरितानि 'तानि' एव 'त्वया उपास्यानि' नियमेन कर्त्तव्यानि 'नो इतराणि' विपरीतानि ॥ १० ॥

ब्रह्मविदाचार्य्योऽन्तेवासिनमनुशास्ति यदस्माकमनुशासनं यच्चानवद्यं कर्म्म तदेव त्वया सन्धार्य्यं न पुनरुत्पथवर्त्तिनां गर्ह्यं तत् किमपि ॥ १० ॥

१५०

एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ॥ ११ ॥

'एतैः उपायैः' पूर्व्वोक्तैर्यथोपादेयैः 'यतते' प्रयत्नं करोति मुमुक्षुः

सन् 'यः तु' 'विद्वान्' ब्रह्मवित्। 'तस्य' विदुषः 'एषः आत्मा' 'विशते' संप्रविशति 'ब्रह्मधाम' आश्रयम् ॥ ११ ॥

यः खलु विद्वान् सत्यमाश्रित्य धर्म्मं प्रशस्तं च कर्म्म निषेव्य भक्त्या च सम्भावितान् प्रसाद्य ब्रह्मोपलब्धये यतते तस्यैवात्मा तद्धाम प्रविशति। स खल्वश्नुते नित्यं तत्सङ्गसमुत्थं भूमानन्दं ॥ ११ ॥

१५१

शृण्वन्तु विश्वेऽमृतस्य पुत्त्राआ ये धामानि दिव्यानि तस्थुः ॥ १२ ॥

'शृण्वन्तु' 'विश्वे' सर्व्वे 'अमृतस्य' ब्रह्मणः 'पुत्राः' 'ये' 'धामानि' 'दिव्यानि' रमणीयानि 'आतस्थुः' अधितिष्ठन्ति ॥ १२ ॥

तत् भास्वरं [illegible] रूपमुषसि सवितृप्रकाशवदात्मनि समुपलभ्य नवोद्यमप्र[illegible] कश्चि[illegible] ब्रह्मवादी ब्रूते भो भो अमृततस्य पुत्राः दि[illegible]: भुवि मनुष्याश्च यूयमाकर्णयत तं तिमिरातीतं ज्यो[illegible] पुरुषमहं वेद्मीति ॥ १२ ॥

[illegible] बद्[illegible] महान्त-

म[illegible] [आदि]त्यवर्णं तमसः परस्तात्।

तमेव विदित्वातिमृत्युमेति

नान्यः पन्था विद्यतेऽयनाय ॥ १३ ॥

'संप्राप्य' समवगम्य 'एनं' परमेश्वरम् 'ऋषयः' दर्शनवन्तः 'ज्ञान-तृप्ताः' ज्ञानेन तृप्ताः 'कृतात्मानः' संस्कृतात्मानः 'वीतरागाः' विगत-रागादिदोषाः 'प्रशान्ताः' इन्द्रियचाञ्चल्यरहिताः 'ते' एव 'सर्व्वगं' सर्व्वव्यापिनं 'सर्व्वतः' सर्व्वत्र 'प्राप्य' 'धीराः' विवेकिनः 'युक्तात्मानः' समाहितस्वभावाः 'सर्व्वम् एव' 'आविशन्ति' प्रविशन्ति ज्ञानेन ॥ १५ ॥

येन खलु विवेकिना धीरेण ब्रह्म विदितं तस्मिन मङ्गलैक-निलये काचित् निरुपाधिका प्रीतिः सन्निधापिता तदिच्छा-योगं प्रयुञ्जानेन च प्रारीप्सितं सर्व्वं प्रसाधितं सएव सर्व्वगतेन तेन सम्परिष्वक्तः सर्व्वमेवाविशति । तच्च सर्व्वमनुप्रविष्टं जानीते ॥ १५ ॥

२५५

सह देवैश्च सर्व्वैः

ष्टयि

हिता 'ते'

परमात्मनः इयं 'वाव' ए

निषत्

॥